॥ श्रीः ॥

नं०

चौखम्बा सुरभारती ग्रन्थमाला

१४६

लिखरा

आचार्यवामनविरचितायाः

# काव्यालङ्कारसूत्रवृत्तेः, आलोकः

## ( प्रश्नोत्तरात्मकः )

( तृतीयाधिकरणे गुणविवेचनात्मकः )


लेखकः—

डॉ० नरेश झा

साहित्याचार्य, साहित्यरत्न, काव्यतीर्थ, विद्यावारिधि

प्राप्तावकाश प्रधानाचार्य

आदर्श रानी चन्द्रावती श्यामा महाविद्यालय, वाराणसी





चौखम्बा सुरभारती प्रकाशन

वाराणसी

निरुक्त-रहस्यम् । डॉ॰ शिवप्रसाद द्विवेदी
नैषधीयचरित-रहस्यम् । डॉ॰ रमाशंकर मिश्र । १-५ सर्ग
नैषधीयचरित- । डॉ॰ शिवप्रसाद द्विवेदी । १०-१३ सर्ग
न्यायसिद्धान्तमुक्तावली-शब्दखण्डः । डॉ॰ अशोकचन्द्र गौड़ शास्त्री
परमलघुमञ्जूषा-सोपानम् । डॉ॰ शिवप्रसाद द्विवेदी
परिभाषेन्दुशेखर-सोपानम् । डॉ॰ शिवप्रसाद द्विवेदी
पाणिनीयशिक्षा-सोपानम् । डॉ॰ बालगोविन्द झा
प्रतापविजय-दीपिका । डॉ॰ शिवप्रसाद द्विवेदी
प्रतिमानाटक-रहस्यम् । डॉ॰ रमाशंकर त्रिपाठी
प्रबन्धसङ्ग्रहः । व्याकरणाचार्य निबन्ध । डॉ॰ ब्रह्मानन्द त्रिपाठी
प्रसन्नराघवन-सोपानम् । डॉ॰ शिवप्रसाद द्विवेदी
भट्टिकाव्य-दर्पणः । स्वामी प्रज्ञान भिक्षु । १-४ सर्ग १५-००, ५-८ सर्ग
भट्टिकाव्यालोकः । डॉ॰ रमाशङ्कर मिश्र । १४-१७ सर्ग १५-००, १८-२२ सर्ग
भारतीयसंस्कृति-सोपानम् । आचार्य शिवप्रसाद द्विवेदी
भूषणसार-दीपिका । ( वैयाकरण-भूषणसार प्रश्नोत्तरी ) रामकिशोर त्रिपाठी
मध्यसिद्धान्तकौमुदी-चन्द्रिका । आचार्य विजयमित्रशास्त्री सम्पूर्ण
प्रथम खण्ड २५-००, द्वितीय २०-००, तृतीय २०-००, चतुर्थ
मनोरमा-रत्नविमर्शः । केशवदेव तिवारी । प्रथम भाग ७-५०, द्वितीय भाग
महाकविकालिदासः । ( विशिष्टाध्ययनम् ) । डॉ॰ शिवप्रसाद द्विवेदी
महाभाष्यम्नवाह्निकीयालोचनम् । नवाह्निक-प्रश्नोत्तरी ) । विजयमित्र शास्त्री
मालविकाग्निमित्र-रहस्यम् । बालगोविन्द झा
मीमांसापरिभाषा सोपानम् । डॉ॰ शिवप्रसाद द्विवेदी
मुक्तावली-प्रकाशः ।(न्यायसिद्धान्तमुक्तावली-प्रश्नो॰) ।राजेन्द्रप्रसाद कोठ्यारी
मुद्राराक्षस-विवेकः । लोकमणि दाहाल
मृच्छकटिक-सोपानम् । डॉ॰ नरेश झा
मेघदूत-तत्त्वालोकः । अशोकचन्द्र गौड़ शास्त्री
यतीन्द्रमतदीपिका-सोपानम् । आचार्य शिवप्रसाद द्विवेदो
रघुवंश-रहस्यम् । रामप्रसाद त्रिपाठी । १-३ १२-५० ६-७ १२-५०, १३-१४
रत्नावलीनाटिका सोपानम् । डॉ॰ शिवप्रसाद द्विवेदी
रसगङ्गाधर-सारः । डॉ॰ नरेश झा
रसगंगाधर-हृदयम् । ज्ञानचन्द्र त्यागी
रामविलाप-काव्यसोपानम् । डॉ॰ शिवप्रसाद द्विवेदी
लघुमञ्जूषा-रहस्यम् । स्वामी रामेश्वर पुरी
लघुशब्देन्दुशेखर-सोपानम् । डॉ॰ शिवप्रसाद द्विवेदी
लघुसिद्धान्तकौमुदी-चन्द्रिका । आचार्य विजयमित्र शास्त्री
वक्रोक्तिजीवित-दीपिका । डॉ॰ नरेश झा
वाक्यपदीय-प्रकाशिका । ( ब्रह्मकाण्ड ) । डॉ॰ सुरेशचन्द्र शर्मा
वासवदत्ता-रहस्यम । डॉ॰ शिवप्रसाद द्विवेदी

॥ श्रीः ॥

चौखम्बा सुरभारती ग्रन्थमाला
१४६

आचार्यवामनविरचितायाः

# काव्यालङ्कारसूत्रवृत्ति-आलोकः

## ( प्रश्नोत्तरात्मकः )

( तृतीयाधिकरणे गुणविवेचनात्मकः )

लेखकः—
डॉ० नरेश झा
प्रधानाचार्य
आदर्श रानी चन्द्रावती श्यामा महाविद्यालय, वाराणसी



चौखम्बा सुरभारती प्रकाशन
वाराणसी

प्रकाशक

चौखम्बा सुरभारती प्रकाशन

( भारतीय संस्कृति एवं साहित्य के प्रकाशक तथा वितरक )

के० ३७/११७, गोपालमन्दिर लेन

पो० बा० नं० ११२९, वाराणसी २२१००१

दूरभाष : ३३३४३१



पुनर्मुद्रित संस्करण 2001 ई.

मूल्य 12.50

अन्य प्राप्तिस्थान

चौखम्बा संस्कृत प्रतिष्ठान

३८ यू. ए., बंगलो रोड, जवाहरनगर

दिल्ली ११०००७

दूरभाष : २३६३९१

*

प्रधान वितरक

चौखम्बा विद्याभवन

चौक ( बनारस स्टेट बैंक भवन के पीछे )

पो० बा० नं० १०६९, वाराणसी २२१००१

दूरभाष : ३२०४०४

मुद्रक

श्रीजी मुद्रणालय

वाराणसी

# प्राक्कथन

संस्कृत-साहित्यशास्त्रस्येतिहासे आचार्य-वामनस्य स्थानं सम्प्रदायप्रवर्तक रूपेणास्ति। यथा—१. रससम्प्रदायस्य प्रवर्तको नाट्याचार्यो भरतमुनिः, २. अलंकारसम्प्रदायस्याचार्यो भामहः, ३. वक्रोक्तेः कुन्तकः, ४. औचित्यस्य क्षेमेन्द्रः, ५. काव्यात्मभूतस्य ध्वनेश्चानन्दवर्धनाचार्यः—प्रथितोऽस्ति, तथैव 'रीतिरात्मा काव्यस्ये'त्युद्घोषकः वामन एव।

कश्मीर-प्रदेशेऽष्टमशतके समुत्पन्नस्य महनीयकीर्तेर्विदुषो वामनस्यैकैवाऽभिनवा कृतिरस्ति—काव्यालङ्कारसूत्रवृत्तिः। अस्मिन् ग्रन्थे सूत्राणि, तद्वृत्तिः, उदाहरणानि च सन्ति। पञ्चस्वधिकरणेषु विभक्तेऽस्मिन् ग्रन्थे काव्यशास्त्रोपयुक्तानां विषयाणां समावेशो विद्यते। तद्यथा-क्रमेण काव्यप्रयोजनम्, अधिकारी, काव्यस्वरूपम्, काव्यात्मा, रीतिः, तत्प्रकाराः, काव्यदोषाणां विवेचनम्, गुणालङ्कारयोः स्वरूपम्, दशशब्दगुणानाम्, दश-अर्थगुणानाञ्च प्रतिपादनम्, शब्दालंकारार्थालङ्कारयोश्च व्याख्यानम्, कविकर्मप्रयुक्तं प्रायोगिकं ज्ञानम्, व्याकरणानुशासनमित्येतेषां विषयाणां विस्तृतं वर्णनं विद्यते। तत्रापि रीतेः काव्यात्मविषये समीक्षणं मौलिकं वैशिष्टयं विद्यते। अस्योपादेयतां गाम्भीर्यञ्चावलोक्य। प्रायः सर्वेषु विश्वविद्यालयेष्वेतस्य ग्रन्थरत्नस्याध्यनमध्यापनञ्च भवति। सम्पूर्णानन्द-संस्कृतविश्वविद्यालये साहित्यविषयस्याचार्यपरीक्षायामस्य तृतीयाधिकरणं गुणनिरूपणात्मकं निर्धारितमस्ति।

अस्ति त्रिपुरहरभूपालकृता 'कामधेनु' नाम्नी विदुषां रञ्जनी सुविख्याता टीका। अपरञ्च सहदेवकृता टीकाऽपि विदुषां समवाये प्रतिष्ठिताऽस्ति। परञ्च संस्कृतस्य वर्तमाने ह्रासयुगे छात्राणां व्युत्पत्त्यभावात् टीकासम्पदः नोपकुर्वन्ति। सुदुस्तरं परीक्षाब्धि सन्तरणाय काप्यभिनवा सरला प्रश्नोत्तरात्मिका व्याख्या अपेक्षते। साम्प्रतं तदभावत्वात् संस्कृतशास्त्रसंरक्षणतत्परैः चौखम्बा सुरभारती प्रकाशनाध्यक्षैर्विनिवेदितोऽहमेतस्मिन् कर्मणि प्रवृत्तः। अतस्तान् प्रति सातिशयमाभारं बिभर्मि। लेखनक्रमे अनेकानि संस्करणानि सहायकान्यासन् तल्लेखकान् सम्पादकान् प्रति च कृतज्ञतां विज्ञापयामि। यत्कृपालेशमात्रेण—अबुधो-

ऽपि बुधायते–एवंभूतान् पद्मविभूषणपदवीकान् आचार्यप्रवरान् गुरुवरान् पं० बलदेव उपाध्यायान् प्रति सादरं प्रणतोऽस्मि ।

पर्यन्तो—अनेन कृतकर्मणा छात्राणां यदि मनागप्युपकारो भवेत्तदा मे श्रमः सार्थकः स्यादिति ।

मञ्जनि मातृ-स्मृति भवन
चकौती ।
दीपमालिका, सं० २०४५ वै०
दिनाङ्के १०।११।८८ ई०

विदुषां वशंवदः
नरेश झा

# विषयानुक्रमः

## समीक्षात्मको भागः



## सूत्र-कारिकोदाहरणव्याख्यात्मको भागः

---

॥ श्रीः ॥

# काव्यालङ्कारसूत्रवृत्ति-आलोकः

---

## मङ्गलाचरणम्

गणाधिपं नमस्कृत्य वाग्देवीं शारदां तथा।
मातरं पितरं चैव प्रणमामि पुनः पुनः॥ १॥
शाण्डिल्यगोत्रसम्भूतः 'यजुआरे' कुलान्वितः।
स्वल्पमतिर्नरेशोऽहं वच्मि सारस्वतं नवम्॥ २॥
आचार्यवामनस्येयं कृतिरस्ति गुणान्विता।
काव्यालंकारसूत्राणां वृत्तिस्वारस्यगुम्फिता॥ ३॥
रीतिरेव हि काव्यात्मा सिद्धान्तोऽत्र समर्थितः।
विशेषेण गुणानां हि समीक्षा तत्र विद्यते॥ ४॥
परीक्षाब्धितितीर्षूणां—छात्राणां श्रेयसे मुदा।
प्रश्नोत्तरात्मकोऽयं वै आलोको रचितो मया॥ ५॥

**( १ ) प्रश्नः—अलङ्कारशास्त्रस्येतिहासे आचार्य-वामनस्य स्थानं निर्धारयत।**

उत्तरम्—प्रस्तुतोऽयं प्रश्नः समीक्षात्मकः ऐतिहासिकश्च। विदन्ति सर्वे विद्वांसो यदिह संस्कृतस्यालंकारिकेषु आचार्यस्य वामनस्यैकं महनीयं विशिष्टं स्थानमस्ति। किमत्र कारणम्। एतत्तु सुस्पष्टमेवास्ति यत्—समीक्षकैरेतैः आचार्यैः रीतिरेव काव्यस्यात्मेति स्वीकृत्य संस्कृत-साहित्य-जगत्येकस्य नवीनस्य सम्प्रदायस्य संस्थापना कृता। योऽद्यापि 'रीति सम्प्रदाय' संज्ञयाभिधीयते। समसामयिकाचार्येषु वैशिष्ट्यमेषामासीत्। एतेषां प्रतिपक्षिणा आचार्येण उद्भटेन तु आलोचना शास्त्रस्य केवलमलंकारे एव ग्रन्थरचनां विधाय कीर्त्तिः अर्जिता। परञ्च—आचार्येण वामनेन त्वालोचनाशास्त्रस्य बहुलांशेन निखिल-तत्त्वानां विषये स्वीया विद्वत्तापूर्णा समीक्षा कृता। अनयोर्द्वासितदृष्ट्या एतेषां तुलनात्मकमध्ययनमलंकारशास्त्रस्य प्रवर्तकाचार्येण भामहेन सह भवितु-

मर्हति। अपिचोद्भटवामनौ कश्मीरदेशवास्तव्यावास्ताम्। 'तथा चैकस्यैव राज्ञो-जयापीडस्य सभायाः सभापण्डितौ स्तः। तथाप्येतौ पारस्परिकरूपेणानभिज्ञौ चास्ताम्। नापि वामनेनोद्भटस्य सिद्धान्तः, स्वग्रन्थे संस्थापितः न चाप्युद्भटेन तथा।

काव्यालंकारसूत्रवृत्ति वामनस्यैकाभिनवा कृतिरस्ति। वैशिष्टचश्चास्य ग्रन्थस्य यदलंकारशास्त्रस्येतिहासे अयमेको ग्रन्थः यो हि सूत्रशैलीं विभर्ति। अस्य महनीयस्य ग्रन्थस्य त्रयो भागाः सन्ति—तद्यथा—सूत्रं वृत्तिरुदाहरणञ्च। सूत्राणां वृत्तीनाञ्च रचना आचार्यं वामनेन स्वयं कृता। तथा चोक्तं काव्यालङ्कारसूत्रस्य माङ्गलिके श्लोके—

प्रणम्य परमं ज्योतिर्वामनेन कविप्रिया।
काव्यालङ्कारसूत्राणां स्वेषां वृत्तिर्विधीयते॥

किम्बहुना—पश्चाद्वर्त्तिभिरालङ्कारिकैरपि 'आचार्यो वामन एव वृत्तेः रचयिता' इति समुद्घोषितः। नास्त्यत्र सन्देहावसरः।

आचार्यवामनस्यान्याचार्येभ्यः वैशिष्टचम्—

सन्ति नाम बहवः सम्प्रदायप्रवर्त्तका आचार्याः। तेषु भरतः रस सम्प्रदायस्य प्रवर्तकः, आचार्यो भामहः अलङ्कारसम्प्रदायस्य प्रवर्तकः, आचार्यं कुन्तकः वक्रोक्तिसम्प्रदादयस्य निर्धारकः, आचार्यं आनन्दवर्धनः ध्वनिसम्प्रदायस्याग्रेसारकः। इमे महानुभावाः विभिन्नसम्प्रदायस्य प्रवर्तकाः सन्ति। परञ्च वामनस्य वैशिष्टचमितोऽप्यधिकमस्ति—इति मन्ये। तद्यथा—

आचार्यं-आनन्दवर्धनस्य यथा 'काव्यस्यात्माध्वनिरिति' सिद्धान्तः तथैव आचार्य वामनस्य 'रीतिरात्मा काव्यस्य' इति सुप्रसिद्धा. भणितिर्विद्यते। भामहात् पूर्वमपि रीतिसिद्धान्तस्योद्भावनाऽऽसीत् परञ्च 'रीतिरेव काव्यस्य आत्मा' इति महत्त्वपूर्णं प्रतिपादनं वामनस्य स्वीयं वैशिष्टचं विद्यते। अपरञ्च वैशिष्टयम्—भामह-दण्डिनौ च रीतेः भेदद्वयादेव परिचितौ स्तः—वैदर्भी-गौड़ी चेति—परञ्च वामनेन तृतीयस्य भेदस्य पाञ्चाली-रीतेः आविर्भावः कृतः। अस्य तृतीयभेदस्य वर्णनं समीक्षणञ्च सर्वप्रथमं वामनेनैव कृतम्।

अन्यच्च—"गुणालंकारौ द्वावपि काव्यस्य शोभाधायकौ" इत्याचार्याः कथयन्तिस्म; परञ्च द्वयोः पार्थक्य निर्देशस्य श्रेयः वामन एव विभर्ति।

एवञ्च—आचार्यं वामनात्पूर्वमलङ्कारशास्त्रे केवलं दशसंख्यकाः गुणा एव स्वीक्रियन्तेस्म, परञ्च वामनेन स्वप्रतिभाप्रकर्षेण दश शब्द गुणाः दश-

अर्थगुणाश्च—एवं विंशतिसंख्यकगुणानामुद्भावना कृता। यद्यपि वामनस्यैतन्मतमन्यैरालंकारिकैः पूर्णतया न स्वीकृतं तथापि मौलिकस्वरूपे नासीत् संशीतिलेशोऽपि केषामपि।

तथा च—अलङ्काराणां विवेचनेऽपि सिद्धहस्ताः इमे प्रतिभान्ति। एतैः उपमालङ्कार एव सर्वश्रेष्ठोऽलङ्कार इति स्वीकृतः अन्येऽलङ्कारास्त्वनुगामिनः, तस्यैव प्रपञ्चरूपाः।

अपि च—वक्रोक्तिविषये एतेषां परिकल्पनाऽत्यन्तं मौलिकी विलक्षणा चास्ति। भामह-दण्डिनौ वक्रोक्तिमलङ्कारस्य मुख्याधार रूपेण स्वीकुरुतः परञ्च वामनेनेयं वक्रोक्तिः अर्थालङ्काररूपेण स्वीकृता। तल्लक्षणं च यथा—'सादृश्यात् लक्षणा वक्रोक्तिः' इति।

वामनस्य मते आक्षेपालङ्कारः द्विविधः। आचार्यं मम्मटेन अनयोरेकः प्रतीपालङ्कार इति कथितः अन्यश्चालङ्कारः समासोक्तिः।

विशेषेणायं विमर्शः—वामनाचार्याः काव्ये रससत्तायाः विशेषेण पक्षपातिनः सन्ति। अलङ्कारसम्प्रदाये रसः केवलं वाह्य काव्यसाधनरूपे एवाङ्गीकृतः वामनेन तु कान्ति नामके गुणरूपे स्वीकृत्य काव्ये रसस्याधिकं-व्यापकत्वं स्वीकृतम्। इत्येव नहि स्थायित्वमुपादेयत्वं च प्रदत्तम्।

एभिः विशिष्टैः कारणैः वामनोऽलङ्कारजगतः जाज्वल्यमानरत्नमिव चकास्ति। अतः आचार्यं वामनस्यालङ्कारशास्त्रस्येतिहासे समुन्नतं स्थानमस्तीति दिक्।

( २ ) प्रश्नः—काव्यालङ्कारसूत्रवृत्तेः कर्त्तुः विस्तरेण परिचयो देयः।

उत्तरम्—काव्यालङ्कारसूत्रवृत्तेः कर्त्ता आचार्यो वामनः काश्मीराधिपस्य जयापीडसंज्ञकस्य, राष्ट्रकूटवंशोद्भवस्य गोविन्द तृतीयस्य च क्रमशः सभापण्डितः सचिवान्यतमश्चासीत्। ऐतिहासिकाः राज्ञो जयापीडस्य शासनकालः ७७९ तः ८१९ ईशवीय पर्यन्तं, गोविन्दस्य शासनकालश्च ७९४ तः ८१३ ईशवीयपर्यन्तं स्वीकुर्वन्ति। अतः वामनस्य कार्यकालोऽष्टमशतकस्यान्ते नवमशतकस्य च प्रारम्भे सिद्ध्यति।

सन्त्यन्यान्यपि कारणान्येतेषां कालनिर्धारणे। ध्वनिप्रवर्तकस्य ध्वन्यालोकग्रन्थस्याभिनवगुप्तकृतसमीक्षया लोचनाख्यया प्रतीयते यत्—आनन्दवर्धनात्

पूर्वमेव वामनस्याविर्भाव कालः। श्रीमता—आनन्दवर्धनेन ध्वन्यालोके प द्यमिदं समुद्धृतं यत्—

अनुरागवती सन्ध्या दिवसस्तत्पुरःसरः।
अहो दैवगतिः कीदृक् ( चित्रा ) तथापि न समागमः॥

अत्र लोचनकाराः आहुः—आचार्य वामनमतेनात्राक्षेपालङ्कारोऽस्ति भामहस्य च सम्मतौ समासोक्तिः। अमुं सदाशयं मनसि निधाय ग्रन्थकारेण समासोक्त्याक्षेपालङ्कारयोर्द्वयोरपि—एकमेवोदाहरणं प्रदत्तम्। तथा चोक्तं ध्वन्यालोकस्य लोचने—

'वामनाभिप्रायेणायमाक्षेपः, भामहाभिप्रायेण तु समासोक्तिरित्यमुमाशयं हृदये गृहीत्वा समासोक्त्याक्षेपयोरिदमेकमेवोदाहरणं व्यतरत् ग्रन्थकृत्'। अतः लोचनकारस्याभिनवगुप्ताचार्यस्य सम्मतौ वामनः आनन्दवर्धनात् पूर्ववर्ती' इति निश्चीयते।

पुरावृत्तपण्डितस्य कल्हणस्य राजतरंगिण्यां काश्मीरनरेशस्य जयापीडस्यामात्येषु 'वामन' संज्ञकस्य मन्त्रिणोऽप्युल्लेखो वरीवर्ति। तथा चोक्तं तत्र—

मनोरथः शंखदत्तश्चटकः सन्धिमांस्तथा।
बभूवुः कवयस्तस्य वामनाद्याश्च मन्त्रिणः॥

कश्मीरदेशे पण्डितेष्वयं प्रवादः प्रचलितोऽस्ति यत्—यो हि वामनः राज्ञो जयापीडस्य मन्त्रिपदे नियुक्तः स एव काव्यालङ्कारसूत्रस्य प्रणेता आलङ्कारिको वामनः। अपि च—

सोऽयं वामनः यो हि ऐतिहासिक तथ्यानामुद्भावकः आसीत्। सैषा स्थितिः यथा—आचार्य वामनेन स्व काव्यालङ्कारसूत्रे ग्रन्थे त्रिशिष्टानामैतिहासिकतथ्यानामुल्लेखो विहितोऽस्ति। तत्रार्थप्रौढ़ि विषयकस्योदाहरणे तैरेकं प्राचीनं पद्यमुद्धृतमस्ति, यस्मिन् चन्द्रगुप्तस्य पुत्रः वसुबन्धोः आश्रयत्वेन चर्चितः। तद्यथा—

"सोऽयं सम्प्रति चन्द्रगुप्ततनयश्चन्द्रप्रकाशो युवा।
जातो भूपतिराश्रयः कृतधियां दिष्टया कृतार्थश्रमः॥

आश्रयः कृतधियामित्यस्य च वसुबन्धु-साचिव्योपक्षेपपरत्वात् साभिप्रायत्वम्। इत्यत्रैतिहासिकानां विदुषां मध्ये घटाटोपो वादविवादः समुपस्थितः। बहुसंख्यकानां विदुषामियं स्पष्टा सम्मतिर्वर्तते यत्—गुप्तवंशोद्भवस्य नरेशस्य

पुत्रः समुद्रगुप्त एव बौद्धाचार्यस्य वसुबन्धोः आश्रयदायक आसीत्। अस्यैतिहासिकतथ्यस्य निर्धारणं वामनस्य सहयोगेनैवाभूत्।

अपरञ्च विद्वत्सु प्रवादोऽयमनुश्रूयते यत् काव्यालङ्कारस्य प्राचीनष्टीकाकारः सहदेवोऽवोचद्यद् वामनस्य या कृतिः सा तु विनष्टा तदुद्धारश्च मुकुलभट्टेन कृता या सम्प्रत्युपलभ्यते। एतच्चिन्त्यम्।

साहित्यशास्त्रे वामनस्य विशिष्टाः सिद्धान्ताः इमे सन्ति, ते च यथा—(१) गुणालङ्कारयोर्भिन्नता, (२) रीतेस्त्रैविध्यम्, (३) वक्रोक्तेर्लक्षणा—रूपता, (४) विशेषोक्तेर्लक्षणवैचित्र्यम्, (५) समग्रस्याप्यर्थालङ्कारप्रपञ्चस्योपमा रूपता।

इत्येव नहि—आचार्यो वामनः रीतिमेव काव्यस्यात्मारूपेण प्रतिपादयति। प्राचीनाः विद्वांसोऽपि रीतिमामनन्ति किन्तु 'आत्मतया रीतिः वामनेनैवोक्ता।

अनेन साहित्यिकावदानपरिचयेनाचार्यस्य वामनस्य माहात्म्यं स्वत एव सिद्धयति।

(३) प्रश्नः—काव्यात्मविषये वामनाचार्यस्य किं मतं, सुस्पष्टं प्रतिपाद्यताम्।

उत्तरम्—समीक्षात्मकोऽयं प्रश्नः आचार्यवामनविरचितायाः काव्यालङ्कारसूत्रवृत्तेः प्रथमाधिकरणस्य द्वितीयाध्यायस्यैवापितु समग्रस्य ग्रन्थस्य मेरुदण्डभूतोऽयम्। आचार्य वामनस्य 'रीतिरात्मा काव्यस्य' एतन्मतं सुप्रसिद्धमस्ति।

साहित्यशास्त्रे किं वा अलङ्कारशास्त्रे काव्यलक्षणप्रसंगे विविधाः मतवादाः सन्ति। भामहादारभ्य पण्डितराज जगन्नाथपर्यन्तमनेकानि लक्षणानि विद्योतमानानि सन्ति। तेषु केचन 'शब्दः काव्यम्' इत्येवामनन्ति, केषांचन मते 'शब्दार्थौ काव्यम्' अन्येषां च मते द्वयोः शब्दार्थयोः यत्र प्राधान्यं तत्काव्यमिति। इत्थं काव्यस्वरूप-विषयेऽनेकविधाः विचाराः लक्षणग्रन्थेषूपलभ्यन्ते; तथैव काव्यात्म विषयेऽपि आचार्येषु नैकमत्यं तिष्ठति। अतः विवादास्पदोऽयं विषयः। काव्यात्मचिन्तन समये दण्डिनाऽऽचार्येण कथितं यत्—"काव्यं ग्राह्यमलंकारात्" एतेन सिद्धयति यत् अलङ्कारात्मिकमिदं काव्यमिति। अलङ्कार एव काव्यस्यात्मेति निर्गलितोऽर्थः संजायते। आचार्य-क्षेमेन्द्रेण तु काव्यात्मविषये विविधान् मतवादानवलोक्य स्थिरीकृतं यत्—'औचित्यं रससिद्धस्य स्थिरं काव्यस्य जीवितम्' इति कथयित्वा काव्यात्मजगति 'औचित्य-सम्प्रदाय' एव प्रवर्तितः। तथैव आचार्य कुन्तकेन काव्यस्य जीवनाधायिका वक्रोक्तिरिति

प्रतिपाद्य 'वक्रोक्तिः काव्यजीवितमित्यात्मत्वेन निगदितम्। आचार्यं विश्वनाथ मतेन तु 'वाक्यं रसात्मकं काव्यमिति नियमानुसारेण काव्यस्यात्मा रस एवेति निश्चितम्। वस्तुतः सर्वसिद्धान्त समन्वयशीलः रसः काव्यस्यात्मनिर्वचने क्षमः। काव्यस्यात्मत्वरूपेण साक्षाद् प्रस्तुतीकृतः—श्रीमता ध्वनिविस्तारवादिना—आचार्येणानन्दवर्धनेन। तैरुक्तं यत्—'काव्यस्यात्माध्वनिरिति। अत्र साक्षाद् संकेतो विद्यते।

अनेन प्रकारेण काव्यस्यात्मनिरूपणे भिन्न-भिन्नपथिका आचार्याः दृश्यन्ते। तेषु काव्यात्मपरिचायकेषु सम्प्रदायेषु रीतिसम्प्रदायोऽपि विद्यते। अस्य सम्प्रदायस्य प्रवर्तकः आचार्यो वामनः। तैरुक्तं यत् 'रीतिरात्मा काव्यस्य' इति। केयं रीतिः इति प्रतिपादनावसरे—काव्यालङ्कारसूत्रवृत्तौ उक्तं यत्—

'विशिष्टा पदरचना रीतिः'

रीतिश्च—रीणन्ति गच्छन्त्यस्यां गुणा इति, अथवा—रीयते क्षरत्यस्यां वाङ्मधुधारेति वा रीतिः। आत्मा च—करङ्कगात्रकल्पकर्कशतर्कवाक्य वैलक्षण्यप्रकटनप्रगल्भः स्फुरत्ताहेतु स्वभावोऽत्रात्मेत्युच्यते। नन्वत्र शंकते यत्—काव्यस्यात्मेत्येतत् कथमुपपद्यते। अशरीरभूतस्यात्मावच्छेदकत्वासम्भवादित्याशङ्कय शब्दार्थयुगलं शरीरं तस्याधिष्ठाता रीतिर्नामात्मेत्युपपत्तिमुन्मीलयितुमाकाङ्क्षितपदमापूरयति। शरीरस्येवेति वाक्य शेष इति। अत्र रीतेरात्मत्वमिव शब्दार्थयुगलस्य शरीरत्वमौपचारिकमित्यवगन्तव्यम्।

अपरश्च—आचार्येण वामनेन विशिष्ट पदरचना रीतिः, वैशिष्टयश्च गुणाः काव्यशोभा कर्तृत्वेन, अलङ्काराश्च गुणैः समुत्पादितानां शोभानामतिशयहेतुत्वेन स्वीकृताः सन्ति। तद्यथा—काव्यालङ्कारसूत्रवृत्तौ—

काव्यशोभायाः कर्त्तारो धर्मा गुणाः।

तदतिशयहेतवस्त्वलङ्काराः।

एवं एतदपि सुनिश्चितं विद्यते यत् काव्ये काव्यशोभाकर्तॄणां नित्यधर्माणां गुणानामभिव्यंजनं रीतिमार्गेणैव भवत्यतो रीतिः काव्यस्यात्मेति निर्विवादं मतं भवितुमर्हति। न च तथाऽभूदिति। यतो हि काव्यस्यात्मत्वविषये भिन्नपथपथिका आचार्याः दृश्यन्ते। इत्यलं पल्लवितेन।

**( ४ ) प्रश्नः—काव्यालंकारसूत्रवृत्तेः वर्ण्यविषयाः के ? ऐतिहासिकदृष्टया समीक्ष्यताम्।**

**उत्तरम्**—संस्कृत-साहित्यस्येतिहासविदो विद्वांसः विदन्ति यद्वामनाचार्याः साहित्यशास्त्रस्य रीतिसम्प्रदायस्य प्रवर्तकाचार्याः सन्ति। के न विदन्त्येनं रीति-

वादिनमाचार्यम्। अन्येषां मते भवतु नाम काव्यस्यात्मा रसोऽलंकारो ध्वनिर्वा किन्त्वेतेषां मतेन रीतिरात्मा काव्यस्येति। रीतिश्च विशिष्टा पदरचना। विशिष्टस्यार्थः गुणयुक्तः। विशेषो गुणात्मा।

समीक्षकाः जानन्ति यत् वामनात् पूर्वमपि रीतिविषयको विचारः प्रवर्तित आसीत्, इत्येव नहि वैदर्भी-गौणी-रीत्योश्च विश्लेषणमप्यभूत्। परञ्च सर्वोत्कर्षेण 'काव्यस्यात्मा रीतिरिति वामनेनैव स्वीकृतः। अपि च पाञ्चाली रीतिमपि स्थापयामास।

कालान्तरे आचार्य-रुद्रटेन लाटीं रीतिं संस्थाप्य चतुष्टयी रीतीनां संख्या निर्धारिता। एवमेव गुणानां विषयेऽपि वामनात् पूर्वं भूयसी चर्चाऽऽसीत्। सर्वप्रथमं काव्यशास्त्रस्याद्याचार्येण मुनिना भरतेन गुणानामुल्लेखो विहितः। दशसंख्यकाः गुणा इति तेषां मतम्। आचार्येण दण्डिनाऽपि सैव संख्या काव्यादर्शे निर्धारिता। वामनस्य गुणविवेचने पूर्ववर्त्तिनामाचार्याणां विचाराः मूलभित्तिरिव प्रतिष्ठिताः।

वामनात् पूर्वं गुणविषये पर्याप्तरूपेण विचारे कृतेऽपि गुणानां सामान्यलक्षणं निर्दुष्टं न केनापि कृतम्। अस्याभावस्य पूर्तिः कृता श्रीमता विदुषा वामनेन।

इत्येव नहि गुणानामलङ्काराणाञ्च पारस्परिकः को भेद इत्यस्य विचारः वामनेनैव प्राक् कृतः। पूर्वाचार्यैः पृथक पृथग् लक्षणं तु कृतं किन्तु 'पार्थक्यस्य प्रवर्तनं न कृतम्। गुणालंकाराणां भेद निर्देशो वामनकृतायां काव्यालंकार सूत्रवृत्तौ यथा —

काव्यशोभायाः कर्तारो धर्माः गुणाः।

तदतिशयहेतवस्त्वलङ्काराः।

पूर्वे नित्याः।

अत्रायमभिप्रायः—आचार्यवामनानुसारं काव्यस्य शोभाधायकाः गुणाः सन्ति, न त्वलङ्काराः। अलङ्कारास्तु गुणैः प्राप्तां शोभां वर्द्धयन्ति—अर्थात्—गुणैर्विना—अलङ्काराः काव्यस्य शोभां नोत्पादयन्ति।

एतदतिरिक्तं—गुणाः नित्याः, अलंकाराश्चानित्या इति प्रतिपाद्य—आचार्यं वामनेनालंकारविदां मार्गनिर्देशः कृतः। पश्चाद्वर्त्तिभिरालंकारिकैः गुणानामात्मनः धर्मः अलंकारांश्च शरीरधर्मः प्रतिपादितः।

आचार्य वामनमतेन गुणाः शब्दार्थनिष्ठाः सन्ति। अतः प्रकारद्वयेन दश शब्दगुणाः दश अर्थगुणाश्च स्वीकृताः। वामनस्येयं स्वतन्त्रा दृष्टिः।

इयं मान्यता वामनेन सहैव समाप्ता। तदनन्तरं गुणानां संख्या भामहेन तिस्रः निर्धारिता। आचार्यं मम्मटेन तु—सर्वेषां गुणानां त्रिषु गुणेष्वेवान्तर्भावितः।

वस्तुतस्तु येषां दशशब्दगुणानामर्थगुणानाञ्चोल्लेखः वामनेन कृतस्तेतु पूर्वं मुनिना भरतेन दण्डिना च व्याख्याताः सन्ति। क्रमानुक्रमे पारस्परिको भेदः वर्तते।

इत्थं संक्षेपेणैतिहासिकदृष्टया काव्यालंकारसूत्रस्य वर्ण्यविषयाः सन्ति।

(५) प्रश्नः–'रीतिरात्मा काव्यस्येति सिद्धान्तं निपुणं समीक्ष्यताम्।

उत्तरम्—प्रस्तुतोऽयं प्रश्नः आचार्यं वामनविरचितायाः काव्यालंकारसूत्रवृत्तेः प्रथमाधिकारणस्य वर्तते। प्राधान्येन व्यपदेशा भवन्तीति कृत्वा—पाठ्यक्रमात् बहिर्भूतोऽपि मुख्योऽयं प्रश्न इति यथाविहितं—समाधानमुपस्थाप्यते।

साहित्यशास्त्रनिपुणाः विद्वांसः जानन्ति यत् यथा—काव्यस्वरूपनिर्धारणे अनेके मतवादाः प्रचलिताः सन्ति—तत्र केचन केवलं शब्दनिष्ठत्वमेव काव्यत्वमङ्गीकुर्वन्ति। अन्येषां मते च—शब्दार्थौ युगपदेव गृह्येते। अपरे च शब्दार्थयोः उभयोः समभावेन यत्र प्राधान्यं तत्र काव्यत्वमिति कथयन्ति। एतदतिरिक्तं शब्दार्थयोरमुख्यभावेन स्थितयोः व्यञ्जनावृत्तिप्राधान्यं यत्र तदुत्तमं काव्यम्।

इत्थं काव्यविषये यथा नानारूपधराः विचाराः विभिन्नश्रेणीकाः उपस्थाप्यन्ते तेनैव प्रकारेण काव्यात्म विषयेऽपि अनेकप्रकारकाः विचाराः प्रवर्तिताः सन्ति। तत्र रसस्य ब्रह्मस्वरूपत्वात् काव्यस्यात्मरूपेण तमेव स्वीकृत्य—वाक्यं रसात्मकं काव्यमिति आचार्यविश्वनाथेन प्रतिपादितम्—श्रुतिरपि प्रतिपादयति—'रसो वै सः' इति' आत्म-परमात्मनोरैक्यभावात्—रसः काव्यस्यात्मस्वरूपः। एवमेव—उत्तमोत्तमकाव्यस्य सापेक्षत्वे 'काव्यस्यात्मा-ध्वनिरिति' प्रतिपाद्य आनन्दवर्धनाचार्येण-व्यङ्ग्यप्रधानध्वनिरेव काव्यस्यात्मस्थानीय इति निश्चितः। ध्वन्यालोके तेनोक्तं यत्—

काव्यस्यात्मा ध्वनिरिति बुधैर्यः समाम्नातपूर्व-
स्तस्याभावं जगदुरपरे भाक्तमाहुस्तमन्ये।
केचिद्वाचां स्थितमविषये तत्त्वमूचुस्तदीयं
तेन ब्रूमः सहृदयमनः प्रीतये तत्स्वरूपम्॥ १। १।

ध्वनिस्वरूपव्याख्यानञ्च— यथा—

प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम् ।
यत्तत् प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु ।।

इतीयता ध्वनिस्वरूपं व्याख्यातम् । अधुना काव्यात्मत्वमितिहास-व्याजेन च दर्शयति तद्यथा—

काव्यस्यात्मा स एवार्थस्तथा चादिकवेः पुरा ।
क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः ।।

अत्रायमाशयः—स एवेति प्रतीयमानमात्रेऽपि प्रक्रान्ते तृतीय एव रसध्वनिरिति मन्तव्यम् । इतिहासबलात् प्रक्रान्तवृत्ति ग्रन्थार्थबलाच्च । तेन रस एव वस्तुत आत्मा, वस्त्वलङ्कारध्वनी तु सर्वथा रसं प्रति पर्यवस्येते । इति वाच्यादुत्कृष्टौ तावित्यभिप्रायेण 'ध्वनिः काव्यस्यात्मा' इति सामान्येनोक्तम् ।

( ६ ) प्रश्नः— वस्तुस्वभाव-स्फुटत्वम् अर्थव्यक्तिः इति गुणः सोदाहरणं सयुक्तिकं च प्रतिपाद्यताम् । ( सं० सं० वि० वि० १९८२ ई० )

उत्तरम् —प्रस्तुतोऽयं प्रश्नः आचार्य वामनविरचितायाः काव्यालंकारसूत्र-वृत्तेः गुणविवेचनात्मके तृतीयाधिकरणे अर्थगुणप्रतिपादने प्रयुक्तस्य द्वितीयाध्यायस्य चतुर्दश-सूत्राधीनः वर्तते । तत्रैवोक्तम् यत्—

वस्तुस्वभावस्फुटत्वमर्थव्यक्तिः । इति ।

अत्र प्रसंगे एतद् कथनं समुचितं भवति यत्—गुणाः शब्दार्थमुखेन काव्यस्योपकारकाः भवन्ति, अत्रायमभिप्रायः यद् गुणाः काव्ये शब्देष्वर्थेषु च निगूढाः भवन्ति, तदनुसारं वामनेन शब्दार्थभेदाभ्यां भेदद्वयमुक्तम् । नेयं नवीना परिकल्पना, वामनात्पूर्वमपि गुणाः शब्दार्थमुखेन काव्यस्योपकारकाः स्वीकृताः । तथापि वामनस्य श्रेयस्त्वं विद्यते यत् तेनादौ गुणविषये स्पष्टं वैज्ञानिकञ्च विवरणं प्रस्तुतम् ।

काव्यशास्त्रिणां मतेन गुणानां शब्दापेक्षया—अर्थे महत्त्वपूर्णा कमनीयता विद्यते । तस्मात् काव्ये अर्थगुणस्यैव प्राधान्यं विद्यते । वस्तुतः अर्थगुणस्य तात्पर्यमस्ति काव्यस्यार्थमुखेनोपकारकाः गुणाः एतदेवाभिलक्ष्यार्थव्यक्तेरयमाशयः— वस्तूनां भावानां स्वभावस्य स्फुटत्वं यदसावर्थव्यक्तिः । एतदुदाहरणं यथा—

पृष्ठेषु शंखशकलच्छविपुच्छदानां राजीभिरङ्कितमलक्तकलोहिनीभिः ।
गोरोचनाहरितबभ्रुबहिःपलाशमामोदते कुमुदमम्भसि पल्वलस्य ।।

प्रस्तुतेऽस्मिन् पद्ये—अर्थव्यक्तेर्योजना यथा—शङ्खशकलच्छविषु पृष्ठेषु चरण भागेषु, अलक्तकलोहिनीभी रेखाभिरङ्कितं गोरोचनावत् हरितानि ब्रभ्रूणि कपिशानि बहिः पलाशानि यस्य तत् कुमुदं, पल्वलस्य वेशन्तस्याऽम्भसि, आमोदते—आमोदमुद्गिरति ।

तथा चात्र कुमुदस्य सरोवरस्य वा स्वभावस्फुटत्वमायाति तेनार्थव्यक्तिः संजायते ।

अत्रायं निष्कर्षः—वस्तूनां स्वभावस्य प्रकाशनं यत्र भवति तत्र 'अर्थस्य व्यक्तिः' इत्यनया व्युत्पत्त्या अर्थव्यक्ति नामकोऽर्थगुणः स्वीक्रियते । नथा च—पृष्ठेष्वित्यादौ । अपरश्चोदाहरणं यथा—

प्रथममलसैः पर्यस्ताग्रं स्थितं पृथुकेसरै-
विरलविरलैरन्तः पत्रैर्मनाङ् मिलितं ततः ।
तदनु बलनामात्रं किञ्चिद् व्यधायि बहिर्दलै-
र्मुकुलनविधौ वृद्धाऽब्जानां बभूव कदर्थना ॥

अत्रायमाशयः—वृद्धकमलानां प्राक् तु ( तेषा ) महत्किञ्जल्कैः अग्रभागाः नम्रीभवन्तिं, तदनु दूरवर्तिन्यः कलिकाः परस्परं संलग्नाः भवन्ति, तत्पश्चाच्च बहिर्भूतानि पत्राणि किमपि म्लानानि भवन्ति । इत्थं विकासक्रियायां वृद्ध-कमलानां दशा शोचनीया विद्यते ।

प्रस्तुतेऽस्मिन् उदाहरणे—जीर्णपत्रयुतानां कमलानां म्लानत्वप्राप्तेः विधि-वर्णनं स्पष्टतया कृतमस्ति, अतोऽस्मिन् पद्येऽप्यर्थव्यक्तिनामकोऽर्थ गुणः विद्यते । एवमर्थगुणस्यार्थव्यक्तेः स्फुटरूपेण प्रतिपादनं भवति

**( ७ ) प्रश्नः—समाधिगुणस्य लक्षणमुदाहरणञ्च निरूप्य तद्गताम् अर्थस्य दृष्टि सविस्तरं विवेचयन्तु । (सं० सं० वि० वि० १९८२ ई०)**

उत्तरम्—आचार्य वामनविरचितायाः काव्यालंकारसूत्रवृत्तेस्तृतीयाधिकरण-स्य द्वितीयाध्याये समाधिगुणस्य लक्षणोदाहरणानि सन्ति, तद्यथा—

'अर्थदृष्टिः समाधिः'—अर्थात् अर्थस्य दृष्टिः दर्शनं समाधिरिति । समा-धिश्च समाधिकरणत्वात् । अवहितं हि चित्तमर्थात् पश्यतीत्युक्तं पुरस्तात् । अर्थात्—अर्थस्य दर्शनमेवार्थदृष्टिरभिधीयते । समाधिकारणत्वादेव समाधिगुणः कथ्यते ।

अत्रायं निष्कर्षस्तात्पर्यभूतः—काव्यस्य चिरन्तनपाठकोऽथवा सामाजिकः यत्र काव्यसाहचर्यात् कवेराशयं सहज एव विजानाति तत्र समाधिनामकोऽर्थ-

गुणो भवति। अत्रेदं वैशिष्ट्यं यत् समतागुणस्येव शब्दार्थयोः न केवलं बोधगम्यतां पुष्णाति—अपि तु कवेः प्रेरणादायकस्य तत्त्वस्यापि ग्रहणं करोति। अतः रचनाकवेः समग्रभावं सहज एव ग्राहयिता काव्यस्य गुण विशेष एव समाधि नामकोऽर्थगुणो भवति। सम्प्रति समाधिगतमर्थस्य दृष्टिद्वैविध्यं ज्ञापनाय—सूत्रमुखेनैव प्रस्तौति ग्रन्थकारः—

अर्थो द्विविधोऽयोनिरन्यच्छायायोनिर्वा।

अत्रायमाशयः—यस्यार्थस्य दर्शनं समाधिः सोऽर्थो द्विविधः—अयोनिः अन्यच्छायायोनिश्चेति। अयोनिः अकारणः। अवधानमात्रकारण इत्यर्थः। अन्यस्य काव्यस्य छाया—अन्यच्छाया यद्योनिर्वा।

अत्रायमाशयः—यस्यार्थस्य दृष्टिः समाधिः कथ्यते, सोऽर्थः द्विविधो भवति, अयोनिः—अन्यच्छायायोनिर्वा। अयोनेरर्थः यस्य किमप्यन्यत्कारणं न स्यात्। अर्थात् अवधानमात्रेणैव यस्यार्थस्य बोधो भवति, एतद्विपरीतं अन्यभावमादाय निर्मितं काव्यमन्यच्छायायोनित्वं कथ्यते। अथ क्रमेणोदाहरणं यथा—

आश्वपेहि मम शीधुभाजनाद् यावदग्रदशनैर्न दृश्यसे।
चन्द्र! मद्दशनमण्डलाङ्कितः खं न यास्यसि ह्रि रोहिणीभयात्॥
मा भैः शशाङ्क मम शीधुनि नास्ति राहुः
खे रोहिणी वसति कातर किं बिभेषि।
प्रायो विदग्धवनितानवसङ्गमेषु
पुंसां मनः प्रचलतीति किमत्र चित्रम्॥

अत्र प्रथमपद्यादेव भावमादाय द्वितीय श्लोकस्य रचना कृताऽस्ति। अतः प्रथम श्लोकस्यार्थोऽयोनिरस्ति, द्वितीयस्य चान्यच्छाया योनिरिति। अत्रेदं तात्पर्यमस्ति-यत् काव्यकर्ता कविः यदा स्वीयैः सहृदयैर्भावैर्नवनवं भावमादाय काव्यं करोति तदा एतादृशस्य काव्यस्य सहृदयानां पाठकानां हृदि काव्याध्ययनात्पूर्वं तदाभासकः कोऽपि संस्कारो न भवति। अतः एतादृशं भावं पाठकः केवलं काव्ये अवधानेनैव विजानाति। यदा हि अन्य कवेर्भावमादाय प्रतिपादितमर्थमन्यकवेर्काव्यस्य साहाय्येनैव विज्ञातुं क्षमो भवेत्—अतस्तत्र-अन्यच्छायायोनिर्भवति। इत्थमर्थस्य दृष्टिः परिस्फुरति।

(८) प्रश्नः - सौकुमार्योदारतार्थव्यक्तिगुणान् सोदाहरणं प्रस्तुवन्तु।
(सं० सं० वि० वि० १९८७ ई०)

उत्तरम्—आचार्य वामनप्रणीतायाः काव्यालंकारसूत्रवृत्तेस्तृतीयाधिकरणस्य प्रथमेऽध्याये शब्दगुणानां द्वितीयेऽध्यायेचार्थगुणानां लक्षणोदाहरणानि सन्ति, तत्रादौ शब्दगतान् सौकुमार्योदारतार्थव्यक्तिगुणान् प्रस्तूयन्ते, तद्यथा—सौकुमार्यस्य लक्षणं यथा—

अजरठत्वं सौकुमार्यम् ।

अत्रायमाशयः—बन्धस्य—अजरठत्वम् अपारुष्यं यत् तत् सौकुमार्यम् । अर्थादत्र पदानां वर्णानाञ्च सुकुमारता-कोमलता वा तिष्ठति ।

अत्रोदाहरणन्तु पूर्वोक्तमेव—

अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः ।
पूर्वापरौ वारिनिधी वगाह्य स्थितः पृथिव्यामिव मानदण्डः ।।

अस्मिन् पद्ये सौकुमार्यं नितरां तिष्ठति । न च तथाऽस्मिन्नुदाहरणं—

निदानं निर्द्वैतं प्रियजनसदृक्त्वव्यवसितः ।
सुधासेकप्लोषौ फलमपि विरुद्धं मम हृदि ।।

प्रियजनमिव स्वरूपस्मृतिः, यद्यपि वियोगावस्थायामेकमात्रं निदानमस्ति तथाप्यमृतसिञ्चनमिवोपयुक्तं प्रियतमस्मरणमपि मह्यं दाहकत्वं तिष्ठति—इत्यत्र कोमलपदानामभावेन सौकुमार्यं नास्ति । इत्थं वामनोक्त सौकुमार्यलक्षणे मम्मटोक्तेषु माधुर्यव्यंजकवर्णेषु च द्वयोः साम्यात् महदन्तरं नास्ति ।

अपि चोदारतायाः लक्षणोदाहरणानि यथा—

विकटत्वमुदारता ।

अत्रायमाशयः—पदसंघटनात्मकस्य बन्धस्य विकटतैवोदारता । यत्र काव्ये पाठकाः वर्णाः नृत्यन्तीवानुभवन्ति सैवोदारता । पदानां लीलायमानमेवोदारता । यथा नृत्यकाले संलग्ननर्त्तकीनां चरणानां निक्षेपैः तथा च चरणेष्वाबद्धनूपुरेभ्यो निसृता ध्वनिरेकं वैचित्र्यपूर्णमाह्लादं जनयति, तथैवोदारतायुक्ते गुणयुक्ते काव्यपाठे पदानां वर्णानां वा योजनापि—अकथनीयमाह्लादं जनयति । तेनात्र सुस्पष्टमेतद्यत्—उदारतागुणे रेफ-शकार-टवर्गीय वर्णानां संयुक्ताक्षराणाञ्चाधिकता भवति ।

अत्रोदाहरणं यथा—

स्वचरणविनिविष्टैर्नूपुरैर्नर्तकीनां ।
झणिति रणितमासीत् तत्र चित्रं कलं च ।।

अत्रोदाहरणे रेफस्य पकारस्य नकारस्य चावृत्यावसाने च 'त्र' इत्यस्य अनुप्रासः स्वध्वनिना—उदारता नामकं गुणमुत्पादयति ।

न पुनः—

चरणकमललग्नैर्नूपुरैर्नर्तकीनां ।
झणिति रणितमासीन्मञ्जुचित्रं च तत्र ॥

अत्रार्थसाम्येऽपि—उदारताया अत्यन्ताभावः, द्वयोरन्तरं सुस्पष्टमेवास्ति । अर्थव्यक्तिश्च—

अर्थव्यक्तिहेतुत्वमर्थव्यक्तिः ।

यत्र काव्ये पठनेन सहैव शीघ्रतया अर्थस्य प्रतीतिर्जायते तत्रार्थव्यक्ति-नामकः शब्दगुणो भवति । अस्योदाहरणन्तु पूर्वोक्तमेव—अस्त्युत्तरस्यामिति । साम्प्रतमर्थगतान् गुणान्—वामनमतेनोपस्थापनं यथा—प्रथमं सौकुमार्यस्यैव । 'अपारुष्यं सौकुमार्यम्' अर्थात्—क्लिष्टमर्थमपि यत्र कठोरैः शब्दैः न व्यक्ती क्रियते तत्र सौकुमार्यं नामकः गुणो भवति । यथा 'मृत' इत्यस्मिन् स्थाने 'यशः शेषमिति' 'एकाकिनं' इत्यत्र देवता द्वितीयमिति 'गच्छेति च' इत्यत्र साधयेति प्रयोगेषु सौकुमार्यगुणो भवति ।

उदारता चार्थगतः—अग्राम्यत्वमुदारता । ग्राम्यत्व प्रसंगे सम्प्राप्ते शिष्ट-भाषायामर्थप्रकटनमेवार्थगुणः । तदुदाहरणञ्च यथा—

त्वमेवं सौन्दर्या स च रुचिरतायां परिचितः
कलानां सीमानं परमिह युवामेव भजयः ।
अयि ! द्वन्द्वं दिष्टचा तदिति सुभगे ! संवदति वा-
मतः शेषं चेत् स्याज्जितमिह तदानीं गुणितया ॥

अत्र ग्राम्यत्वप्रसंगं 'कला' 'शेष' शब्दाभ्यां प्रकटनं विधायोदारता गुण-विषयं व्यनक्ति ।

अर्थव्यक्तिश्च—वस्तुस्वभावस्फुटत्वमर्थव्यक्तिः । वस्तूनां भावानां स्वभावा-नाञ्च स्फुटत्वमेवार्थव्यक्तिर्भवति । तद्यथोदाहरणम्—

पृष्ठेषु शंख शकलच्छविषु च्छदानां राजीभिरङ्कितमलक्तकलोहिनीभिः ।
गोरोचनाहरितबभ्रुबहिः पलाशमामोदते कुमुदमम्भसि पल्वलस्य ॥

अस्मिन् पद्ये—वस्तुस्वभाव—वर्णने स्फुटत्वं स्पष्टमेवास्ति, अतः 'अर्थ-व्यक्ति' नामकोऽर्थगुणः ।

प्रथममलसैः पर्यस्ताग्रं स्थितं पृथुकेसरैः—
विरलविरलैरन्तः पत्रैर्मनाङ् मिलितं ततः ।
तदनु वलनामात्रं किञ्चिद् व्यधायि बहिर्दलैः—
र्मुकुलनधिवधौ वृद्धाऽब्जानां बभूव कदर्थना ॥

प्रस्तुतोदाहरणे—जीर्ण ( पुरातन ) कमलानां म्लानविधेः वर्णनं सुस्पष्टमस्त्यतोऽत्रापि—अर्थव्यक्तिनामकोऽर्थगुणो भवति ।

( ङ ) प्रश्नः—श्लेष-समता-समाधिगुणाः सोदाहरणं साधनीयाः । ( सं० सं० वि० वि० १९८७ ) ।

उत्तरम्—आचार्य-वामनप्रणीतायाः काव्यालंकारसूत्रवृत्तेर् तृतीयाधिकरणस्य प्रथमाध्याये शब्दगुणानां सोदाहरणानि लक्षणानि सन्ति । तेषु श्लेष-समता समाधिगुणानामपि क्रमेण लक्षणोदाहरणानि सन्ति। तद्यथा क्रमेण—श्लेष नामकस्तृतीयगुणः श्लेषः—तल्लक्षणञ्च यथा—मसृणत्वं श्लेषः ।

अत्रायमाशयः—यत्र एकदैव प्रयुक्तानि पदानि संयुक्तं पदमिव प्रतीयन्ते तत्र मसृणत्वं भवति । इदमेव मसृणत्वं—शब्दनिष्ठा चिक्कणता—श्लेष नामको शब्दगुणो भवति ।

उदाहरणञ्चास्य यथा—

अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः ।
पूर्वापरौ वारिनिधी वगाह्य स्थितः पृथिव्यामिव मानदण्डः ॥

प्रस्तुतेऽस्मिन् उदाहरणे—प्रयुक्तानि भिन्न-भिन्नपदानि—सममेलनात् एक पदवत् प्रतीयन्ते, अतोऽत्र श्लेष नामकः शब्दगुणः । अत्र माधुर्यव्यञ्जक पदानां नैरन्तर्येण प्रयोगः ।

अपवादरूपेणात्र—'न पुनः 'ब्राह्ममुरः स्थले' 'भ्रमरीवल्गुगीतयः' तडित्कलिमञ्जुगीतयः 'तडिज्जटिलमाकाशम्' इत्यादौ सूत्र—उरस्थलयोर्मध्ये-प्रयुक्तं ब्राह्मपदं उभयमपि पृथक्करोति । सैषा स्थितिः 'भ्रमरी' इत्युदाहरणेऽप्यस्ति । तडिदित्युदाहरणे 'ड' वर्णस्य माधुर्यव्यञ्जकवर्णानां मध्ये आपातात् मसृणतां समापयति ।

एभिरुदाहरणैरेतद् सुस्पष्टं भवति यत् श्लेष नामकः शब्दगुणः—ओजप्रसादयोर्व्यञ्जकवर्णैः सह समानरूपेण स्थास्यति ।

प्रसङ्गक्रमेण चतुर्थशब्दगुणस्य 'समता'ख्यस्य लक्षणोदाहरणे यथा—मार्गाभेदः समता ।

अत्रायं भावः—मार्गस्य अर्थात् रचनाया अभेद एव समता नामकः शब्द-गुणो भवति । निष्कर्षश्चात्र यस्य मार्गस्यावलम्बनमादौ स्यात् तस्य अत्याग एव समता विद्यते । अस्याः स्थितिः श्लोकेऽथवा प्रबन्धे—उभयत्र वा सम्भवः । समताशब्दगुणस्योदाहरणमपि श्लेषशब्दगुणस्येव—अस्त्युत्तरस्यापिति विपर्यय-स्तु यथा—

प्रसीद चण्डि ! त्यजमन्युमञ्जसा जनस्तवायं पुरतः कृताञ्जलिः ।
किमर्थमुत्कम्पितपीवरस्तनद्वयं त्वया लुप्तविलासमास्यते ॥

अस्मिन् उदाहरणे—मार्गभेदकारणात् समता गुणं नास्ति । यतो ह्यत्र—माधुर्यव्यञ्जकवर्णानां मध्ये 'चण्डि' इत्येतद् कठोरवर्णैर्युक्तपदभावात् पूर्वार्द्धे बन्धशैथिल्यात्—उत्तरार्द्धे च दृढबन्धकारणात् मार्गभेदः स्पष्टः ।

साम्प्रतमनुक्रमेण समाधिनामकं शब्दगुणं प्रस्तौति—

आरोहावरोहक्रमः समाधिः

समाधिनामकः पञ्चमः शब्दगुणः । अत्रारोहावरोहयोः क्रमं एव—आरोहा-वरोहक्रमः । समाधेरर्थः परिहारः । अत्र क्वचित् आरोहपूर्वकोऽवरोहो भवति । यथा—'निरानन्दः' इति । रसस्य भोगानन्तरं त्यक्तस्य कुन्दपुष्पस्य मधौ न तदानन्दं भवति । क्वचिदवरोहपूर्वकः आरोहो भवति—यथा—'नराः शील-भ्रष्टाः' इति । शीलभ्रष्टाः नराः व्यसने निमज्जयन्ति तथैव वृक्षाः तटभ्रष्टे सति जलेन निमज्जयन्ति । अत्र 'नराः' इत्यस्मिन् पदे शैथिल्यकारणादवरोहः, 'शीलभ्रष्टाः' इत्यत्र चारोहः । केषांचन विदुषां मते तु यत्र क्रमेण आरोहानन्तर-मवरोहो भवेत् तत्र आरोहावरोहक्रमो भवति । यथा—'निवेश' इत्यत्र । इत्थं समाधि नामकः गुणः आरोहावरोहयोर्मिश्रिणात् त्रिविधः ।

अत्र शंकते यत्—आरोहावरोहौ क्रमशः ओज-प्रसादयोरेवरूपसंभवात् ।
अनयोः संयोगात् निर्मितः समाधिगुणः प्रसादात् भिन्नं न किमपि ।
अनेन प्रकारेण—शाब्दिकाः श्लेष समता-समाधिगुणाः वर्णिताः ।

एवमेवार्थगुणेष्वपि श्लेष-समता-समाधिगुणाश्चर्चिताः भवन्ति । तेऽपिसंक्षे-ण यथा—'घटनाश्लेषः' । घटना च क्रमकौटिल्यानुल्वणत्वोपपत्ति योगः

उदाहरणञ्चास्य—

दृष्ट्वैकासनसंगते प्रियतमे पश्चादुपेत्यादरा-
देकस्या नयने निमील्य विहितक्रीडानुबन्धच्छलः । इत्यादि ।

समता—नामकोऽर्थगुणो यथा—

अवैषम्यं समता । अवैषम्यस्यार्थः प्रक्रमः, तस्याभेद एव समता ।
यथा—

च्युतसुमनसः कुन्दा पुष्पोद्गमेष्वलसा द्रुमा ।
मलयमरुतः सर्पन्तीमे वियुक्तधृतिच्छिदः ।। इत्यादि ।

समाधिश्चार्थगुणयुक्तो यथा—

'अर्थदृष्टिः समाधिः'

अर्थस्य दर्शनं दृष्टिः । समाधिकारणत्वात् समाधिः ।
अस्य—उदाहरणञ्च यथा—

आश्वपेहि मम शीधुभाजनात् यावदग्रदशनैर्न दृश्यते ।
चन्द्र ! मद्दशनमण्डलाङ्कितः खं न यास्यसि हि रोहिणीभयात् ।।

अत्रायोनिरर्थः । अन्यच्छायायोनिश्च—

मा भैः शशाङ्क मम शीधुनि नास्ति राहुः खे रोहिणी वसति कातर किं बिभेषि ।
प्रायो विदग्धवनितानवसङ्गमेषु पुंसां मनः प्रचलतीति किमत्र चित्रम् ।।

इत्यलं पल्लवितेनेति दिक् ।

**( १० ) प्रश्नः—काव्यालंकारसूत्रवृत्तेस्तृतीयाधिकारणस्य प्रतिपाद्य विषयः कः, संक्षेपेण प्रतिपाद्यताम् ।**

उत्तरम्—आचार्यवामनस्य सुप्रसिद्धा कृतिरस्ति—काव्यालंकारसूत्रवृत्तिः । अत्र त्रयो भागाः विद्यन्ते—मूलभागः—काव्यालङ्कारसूत्रम्, तदुपरि तस्यैव वामनस्य वृत्तिरस्ति कविप्रिया नाम्नी । अनेन प्रकारेणास्य ग्रन्थस्य भागत्रयमस्ति—मूल सूत्राणि, तेषां वृत्तिः, तदुदाहरणानि च । एवञ्च वामनस्यायं ग्रन्थः पञ्चस्वधिकरणेषु विभक्तोऽस्ति । प्रत्येकस्मिन् अधिकरणे कतिपय अध्यायाः विद्यन्ते । इत्थं महनीये ग्रन्थेऽस्मिन् पञ्च-अधिकरणानि सन्ति, द्वादशाध्यायाः, ३१९ सूत्राणि च सन्ति ।

तत्र प्रथमेऽधिकरणे—काव्यस्य प्रयोजनम्, कविकर्मणोऽधिकारी, काव्यस्वरूपनिर्वचनम्, काव्यस्यात्मा रीतिरिति—रीतिप्रकाराश्च वर्णिताः सन्ति,

द्वितीयोऽधिकरणे—काव्य-दोषाणां पद-पदांश-वाक्य-अर्थ गतानां सूक्ष्मदृष्ट्या विवेचनमस्ति ।

तृतीये चाधिकरणे गुणविवेचनात्मके-गुणालङ्कारयोः स्वरूपं भेदांश्च प्रदर्श्य दशशब्दगुणाः दशार्थगुणाश्च प्रतिपादिताः सन्ति ।

अस्मिन् तृतीयाधिकरणे मुख्यतः प्रतिपाद्यविषयाः—गुणविवेचनेन-अलंकार-गुणयोः पार्थक्यस्य विवेचनं कृत्वा शब्दार्थयोः दशगुणानां पृथग् पृथक् विस्तरेण विवरणप्रस्तुतीकरणम् ।

तत्र प्रथमेऽध्याये—आदौ गुणस्वरूपविवेचनम्, तदनु अलङ्कारस्वरूप-विवेचनम्, तयोर्भेद प्रतिपादनम्, नित्यानित्यभेदविवेकः, शब्दगुणाः—ओजः प्रभृतयः, ओजो गुणस्वरूपम्, प्रसादगुणस्वरूपं, प्रसादस्य गुणत्वसिद्धिः, श्लेष-गुणस्वरूपम्, समतागुणस्वरूपम्, समाधिगुणस्वरूपम्, समाधेः संगतिः स्थितिश्च समाधेरन्यलक्षणम्, माधुर्यगुणस्वरूपम्, सौकुमार्यगुणस्वरूपम्, उदारतागुण-स्वरूपम्, अर्थव्यक्तिगुणस्वरूपम्, गुणत्वसिद्धिः, गुणस्य रीतिधर्मत्वसंसाधनञ्च ।

द्वितीयेऽध्याये च—अर्थगुणस्वरूप, ओजः प्रसादादीनामेव शब्दार्थगुणत्वौचित्यम्, ओजः प्रसादादीनामर्थगुणानां प्रस्तुतीकरणम्, अयोनिरर्थप्रतिपादनम्, अन्यच्छायायोनिरर्थप्रतिपादनम्, सूक्ष्मार्थप्रतिपादनम्, गुणानां महत्त्वप्रतिपादनम् काव्यपाकम्, वृन्ताकपाकम्, रसेषु गुणसंगतिरित्येते विषयास्तृतीयाधिकरणस्य प्रतिपादनतत्परास्सन्ति ।

( ११ ) प्रश्नः—ओजःप्रसादादीनां गुणानां कथं रीतिधर्मत्वमिति प्रतिपाद्यताम् ।

उत्तरम्—प्रश्नोऽयं समीक्षात्मकः श्रीमदाचार्यवामनप्रणीत—काव्यलंकार-सूत्रवृत्तिसम्बन्धितः । विदन्ति सर्वे आलंकारिकाः विद्वांसो यत् यथा सांसारिके लोके मानवानां विग्रहस्य, तदङ्गसंस्थानस्य, तद्दोषाणां, तद्गुणानामलङ्कारा-णाञ्च कल्पना भवति । तथैव काव्यविचारसमये काव्यस्य किमपि कलेवरं, तस्य आत्मा, तस्य दोषाः, अन्ये शोभावर्धकाः गुणालंकारादयो भवन्ति ।

अत्र विचारे समुपस्थिते सति—इत्थमायाति यत् आचार्येण रीतिरात्मा काव्यस्येति निर्णायकेन श्रीमता वामनेन स्वीये काव्यालंकारसूत्रवृत्तौ—शब्दार्थौ काव्यमिति निरूपितम् । यदि चेत् शब्दार्थौ काव्यस्य शरीरं तदा यथा शरीर-स्थात्मा भवति तथैव काव्यस्यापि—आत्मा स्यात्, इति विचारे समुपस्थिते सति, तन्निराकरणायाचार्येण वामनेनोक्तं यत्—

रीतिरात्मा काव्यस्य ।

यथा—तार्किकाः गुणगुणिनोः साहचर्यं समवायसम्बन्धेन कल्पयन्ति तद्वत् प्रस्तुत ग्रन्थकार—सम्मत्या काव्यात्मरूपेण रीतेः व्यवस्थापनात्—रीतिरेव

गुणी एवञ्च समवायसम्बन्धेन गुणाः रीतौ तिष्ठन्त्येतस्मात् कारणात् रीतिधर्मत्वं सुतरां सिद्धयति। तथा चोक्तं शब्दगुणगणनाप्रसंगे आचार्येण वामनेन—

'ओजप्रसादश्लेषसमता समाधिमाधुर्यसौकुमार्योदारतार्थव्यक्तिकान्तयो-बन्ध गुणा इति'। अपि च विशिष्ट पदरचना रीतिः' इति रीतिलक्षणप्रसंगे पदरचनायाः रीतिधर्मत्वेन प्रतिपादनात्, सा च शब्दार्थाभ्यां संश्लिष्टा। अतस्तत्र शब्दार्थधर्मता तिष्ठति।

यत्तु केचन आचार्याः गुणान् पाठधर्मत्वेन स्वीकुर्वन्ति। वामनस्तु तन्मतं खण्डयन्नाह 'न पाठधर्मा सर्वत्रादृष्टेः'।

अत्रायमाशयः—इमे पाठधर्माः न भवितुमर्हन्ति यतोह्येषा स्थितिः सर्वत्र दृष्टिगोचरा भवति। धर्मश्च सर्वत्र समानरूपेणा व्याप्तो भवति, तस्मात् नेमे धर्माः विशेषाधानकारकाः गुणाः भवन्ति। अतः गुणा एवैते।

कथनस्याभिप्रायोऽयं वर्तते यत्—गुणानां सार्वदेशिकं महत्त्वं भवति। सद्गुणैरेव काव्यस्य काव्यत्वं सिद्धयति, सहृदयैः काव्यतत्त्वजिज्ञासुभिः एतवेद्यं भवति। एतन्महत्त्वं प्रतिपादयता आचार्येण वामनेन श्लोकद्वयेन सुस्पष्टीकृतं यत्—

युवतेरिव रूपमङ्ग काव्यं स्वदते शुद्धगुणं तदप्यतीव।
विहितप्रणयं निरन्तराभिः सदलङ्कारादिव्यकल्पनाभिः॥
यदि भवति वचश्च्युतं गुणेभ्यो वपुरिव यौवनबन्ध्यमङ्गनायाः।
अपि जनदयितानि दुर्भगत्वं नियतमलङ्करणानि संश्रयन्ते॥

एवं गुणानामलङ्काराणाञ्च रीतिधर्मत्वं सुतरां सिद्धयति।

(१२) प्रश्नः—काव्यशास्त्रे गुणानां महत्त्वं किमिति वामनोक्तदिशा प्रतिपादयत।

उत्तरम्—आचार्यवामनप्रणीतायां काव्यालङ्कारसूत्रवृत्त्यां तृतीयमधिकरणं गुणविवेचनात्मकमस्ति। गुणानां महत्त्वविषये तन्महत्त्वं काव्यशास्त्रे धर्मशास्त्रे च निर्विवादरूपेण प्रख्यातमस्ति। महाकविना लोकरञ्जकेन स्पष्टमुक्तं यत्—'पदं हि सर्वत्र गुणैर्निधीयते' 'गुणाः पूजास्थानं गुणिषु लिङ्गं न च वयः"। एताभ्यां सूक्तिभ्यां सूच्यते यत् गुणिनः पुरुषस्य सर्वत्र आदरो भवति, निर्गुणस्य चानादरः। दोषाणामुच्छेदाय गुणानामाविष्कारः। दोषैर्यदि रसापकर्षो भवेत् तत्र माधुर्यव्यंजकैः गुणैः रसानामुद्गमो जायते।

गुणालंकारयोर्विवेचनावसरे वामनात् पूर्वमाचार्येण—उद्भटेन-स्वग्रन्थे 'भामह विवरणे' पूर्ववर्त्तिभिराचार्यैः कृतो गुणालङ्कारयोर्भेदः गड्डुलिका प्रवाह मात्र एव। तेषां मतमस्ति—काव्ये गुणालंकारौ द्वावपि समवायवृत्त्या तिष्ठतः, लोके च गुणानां स्थितिः समवायवृत्त्या—अलंकाराणाञ्च स्थितिः संयोगवृत्त्या भवति, किञ्च नैषा स्थितिः काव्यजगति। काव्यभूमौ ये गुणालंकारयोः स्थितिं लोकानुसारिणीं स्वीकुर्वन्ति ते तत्त्वं न जानन्ति।

एतद्विपरीतमन्ये विद्वांसः काव्ये गुणानामलङ्काराणाञ्च भेदमामनन्ति। परञ्च वामनमते अलंकारापेक्षया गुणानां महत्त्वमधिकमस्ति। अत एव मम्मटात् पूर्ववर्तिषु आचार्येषु वामनस्य स्थानं सर्वातिशायि वर्तते।

दण्डिना तु स्वकाव्यादर्शे गुणाः रीतिपोषकाः सन्तीति स्वीकृताः पुनः पृथग् रूपेण निर्दिष्टाः, शोभाधायकानि तत्त्वानि—अलंकाराः न तु गुणाः। अतः ओजः प्रसादादि गुणानां महत्त्वविषये काव्यालंकारसूत्रवृत्तौ स्पष्टमुक्तं यत्—

यद्विपर्ययात्मानो दोषास्तान् गुणान् विचारयितुं गुणविवेचनमधिकरणं प्रारभ्यते। तत्रौजः प्रसादादयोः गुणाः यमकोपमादयस्त्वलङ्कारा इति स्थितिः काव्यविदाम्। के पुनः गुणाः, गुणत्वञ्च किमिति जिज्ञासायाम्—

'काव्यशोभायाः कर्तारो गुणाः।'

अत्रायमाशयः—ये शब्दार्थयोः धर्माः काव्ये शोभायाः उत्पादकाः भवन्ति ते गुणाः कथ्यन्ते। ते च ओजः प्रसादादयः। एते गुणाः अलंकारैर्विनापि काव्ये शोभामुत्पादयिष्यन्ति। अतः इमे काव्य गुणाः।

मम्मटादिभिराचार्यैः ओजः प्रसादादि गुणानां साक्षाद्रसोपकारकत्वं प्रतिपादितम्। उक्तञ्च यथा—

ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मन.।
उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः॥

अतः काव्यशास्त्रे गुणानां महत्त्वं निर्विवादमिति संक्षेपः।

**(१३) प्रश्नः—अलङ्कारस्वरूपविवेचनं कृत्वा गुणालङ्कारयोर्कः भेद? इति विवेचयत।**

उत्तरम्—आचार्य वामनप्रणीतायाः काव्यालंकारसूत्रवृत्तेस्तृतीयाधिकरणस्य प्रथमाध्याये गुणलक्षणं निरूप्य—अलंकारस्य लक्षणं विद्यते। अत्रैतदधिकारणमस्ति यत् द्वयोः गुणालङ्कारयोर्को भेद इति, एतत्तु पृथक् पृथग् लक्षण-

प्रतिपादनेनैव भविष्यति इति कृत्वा गुणलक्षणनिरूपणानन्तरमलंकारलक्षणं यथा—

'तदतिशयहेतवस्त्वलंकाराः ।'

तस्याः काव्यशोभाया अतिशयस्तदतिशयस्तस्य हेतवोऽलंकाराः भवन्ति । 'अलंक्रियतेऽनेनेति—अलंकारः' अलंकृतिः अलंकारः । अस्य महन्महत्त्वमवलोक्य श्लोकद्वयेन तत् समीक्षां प्रस्तौति—

युवतेरिव रूपमङ्गं काव्यं स्वदते शुद्धगुणं तदप्यतीव ।
विहितप्रणयं निरन्तराभिः सदलङ्कारविकल्प कल्पनाभिः ॥
यदि भवति वचश्च्युतं गुणेभ्यो वपुरिव यौवनवन्ध्यमङ्गनायाः ।
अपि जनदयितानि दुर्भगत्वं नियतमलंकरणानि संश्रयन्ते ॥

वस्तुतस्तु—अलंकाराः गुणोद्दीपकाः भवन्ति । गुणैर्विहीनोऽलंकारोऽपि सारहीन एव ।

तात्पर्यमिदमत्र—काव्यस्य सौन्दर्यं तद्गुणेषु निर्भरं न त्वलंकारेषु । अलंकारास्तु गुणानां प्रकाशनायोपादेयास्सन्ति ।

( १४ ) प्रश्नः—के शब्दगुणाः नामतो निर्दिश्य तेषां पृथक् पृथक् लक्षणोदाहरणानि निरूपणीयानि ।

उत्तरम्—आचार्यवामनप्रणीतायाः काव्यालकारसूत्रवृत्तेस्तृतीयाधिकरणस्य प्रथमाध्याये शब्दगुणानां लक्षणोदाहरणानि सन्ति । तत्र नामतो निर्देशः यथा—

ओजः प्रसाद-श्लेष-समता-समाधि-माधुर्य-सौकुमार्योदारताऽर्थव्यक्तिकान्तयो वन्धगुणाः ।

अर्थात्—ओज-प्रसाद-श्लेष-समता-समाधि-माधुर्य सौकुमार्य-उदारता-अर्थव्यक्ति-कान्तिश्चेमे दश शब्दवन्धगुणाः भवन्तीत्यर्थः ।

अथ क्रमेण तेषां लक्षणोदाहरणानि यथा—

१. ओजसः—'गाढबन्धत्वमोजः' । वन्धस्य गाढत्वं यत् तदोजः ।

उदाहरणम्—विलुलितमकरन्दा मञ्जरीर्नर्त्तयन्ति । अत्र रचनायां गाढत्वं स्फुटम् ।

२. प्रसादस्य—'शैथिल्यं प्रसादः' वन्धस्य शैथिल्यं प्रसादः ।

उदाहरणम्—कुसुमशयनं न प्रत्यग्रं न चन्द्रमरीचयो
च मलयजं सर्वाङ्गीणं न वा मणियष्टयः ।

अस्मिन् उदाहरणे—'प्रत्यग्र' 'चन्द्र' इत्यादौ संयुक्तवर्णे प्रयुक्तेऽपि ओजसः उत्कृष्टत्वं न प्रतीयते, किन्तु वृत्तिशैथिल्ययुक्तस्य प्रसादस्य समुत्कर्षः लक्ष्यते। अपरञ्च—अथ स विषयव्यावृत्तात्मा यथाविधि सूनवे।

नृपतिककुदं दत्वा यूने सितातपवारणम् ॥

उदाहरणमिदमोजः—प्रसादयोः समान रूपेण तिष्ठति।

३. श्लेषस्य—मसृणत्वं श्लेषः। मसृणत्वमर्थात् शद्वनिष्ठचिक्कणत्वं नाम यस्मिन् सति बहून्यपि पदानि—एकवद्भासन्ते।

उदाहरणम्—अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः।
अत्र प्रयुक्तानि पदानि संयोगादेकपदवत् प्रतीयन्ते, तस्मात् श्लेषः।

४. समतायाः—'मार्गाभेदः समता'। मार्गस्य = रचनायाः अभेद एव समता।

उदाहरणम्—पूर्वोक्तम् 'अस्त्युत्तरस्यामित्यादौ। अत्र बन्धस्य शैथिल्यात् कोमलकान्तपदावली प्रयोगाच्च समता नामकः शद्वगुणो भवति।

५. समाधेः—आरोहावरोहक्रमः समाधिः। आरोहावरोहयोः क्रम एव-समाधिः।

उदाहरणम्—(आरोहपूर्वके) 'निरानन्दः कौन्दे मधुनि परिभुक्तोज्झितरसे'।
(अवरोहपूर्वकस्त्वारोहे) 'नराः शीलभ्रष्टा व्यसन इव मज्जन्ति तरवः'।

६. माधुर्यस्य—पृथक् पदत्वं माधुर्यम्। बन्धस्य रचनायाः पृथक् पदत्वं माधुर्य नामकः शब्द गुणो भवति।

उदाहरणम्—अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः।
अत्र पदानां पृथग् भावात् माधुर्यं नामकः शब्दगुणः विद्यते।

७. सौकुमार्यस्य—अजरठत्वं सौकुमार्यम्। बन्धस्य रचनाया अजरठत्वं सौकुमार्यं शब्दगुणस्य लक्षणम्। अजरठत्वञ्चापारुष्यम्।

सौकुमार्यञ्चापि—सुकुमारतायाः भावत्वम्।

उदाहरणम्—पूर्वोक्तमेव 'अस्त्युत्तरस्यामि' त्यादि।

८. उदारतायाः—विकटत्वमुदारता। बन्धस्य रचनायाः विकटत्वं भवति तत्र-उदारता नामकः शब्दः गुणः। विकटत्वञ्च—यस्मिन् सति नृत्यन्तीव पदानीति जनस्य वर्णभावना भवति तत्।

उदाहरणम्—स्वचरणविनिविष्टैर्नूपुरैर्नर्तकीनाम्।

झणिति रणितमासीत् तत्र चित्रं कलंच ॥

अत्र—रेफस्य षकारस्य णकारस्य नकारस्य चावर्तनमन्ते 'त्र' इत्यस्यानुप्रासश्च स्वध्वनिना उदारता शब्दगुणमुत्पादयति ।

९. अर्थव्यक्तेः—अर्थव्यक्तिहेतुत्वमर्थव्यक्तिः यत्र काव्यपाठेन सहैव शीघ्रतया अर्थस्य प्रतीतिः भवति तत्र 'अर्थव्यक्ति' नामकः शब्दगुणः ।

उदाहरणम्—( पूर्वोक्तमेव )—'अस्त्युत्तरस्यामित्यादि ।

१०. कान्तेः—औज्ज्वल्यं कान्तिः । बन्धे=रचनायां—पदसंघटनायां वा या उज्ज्वलता सैव कान्तिः कथ्यते ।

उदाहरणम्—'कुरङ्गी नेत्राली स्तबकित वनाली परिसरः ।'

उपर्युक्तानां दश शब्दगुणानामेकत्र सङ्कलनं यथा निम्नाङ्कितेषु पद्येषु—

पदन्यासस्य गाढत्वं वदन्त्योजः कवीश्वराः ।
अनेनाधिष्ठिताः प्रायः शब्दाः श्रोत्ररसायनम् ॥
श्लथत्वमोजसा मिश्रं प्रसादंच प्रचक्षते ।
अनेन न विना सत्यं स्वदते काव्यपद्धतिः ॥
यत्रैक पदवद्भावं पदानां भूयसामपि ।
अनालक्षितसन्धीनां स श्लेष परमो गुणः ॥
प्रतिपादं प्रतिश्लोकमेकमार्गपरिग्रहः ।
दुर्बन्धो दुर्विभावश्च समतेति मतो गुणः ॥
आरोहन्त्यवरोहन्ति क्रमेण यतयो हि यत् ।
समाधिर्नाम स गुणस्तेन पूता सरस्वती ॥
बन्धे पृथक्पदत्वं च माधुर्यमुदितं बुधैः ।
अनेन हि पदन्यासाः कामं धारामधुच्युताः ॥
यथा हि च्छिद्यते रेखा चतुरं चित्रपण्डितैः ।
तथैव वागपि प्राज्ञैः समस्तगुणगुम्फिता ॥
बन्धस्याजरठत्वं च सौकुमार्यमुदाहृतम् ।
एतेन वर्जिता वाचो रूक्षत्वान्न श्रुतिक्षमाः ॥
विकटत्वं च बन्धस्य कथयन्ति ह्युदारताम् ।
वैचित्र्यं च प्रपद्यन्ते यथा शून्याः पदक्रमाः ॥
श्वादिव गतिवचिः पुरस्तादिव वस्तुनः ।
यत्रार्थव्यक्तिहेतुत्वात् साऽर्थव्यक्ति स्मृतो गुणः ॥

ओज्ज्वल्यं कान्तिरित्याहुः गुणं गुणविशारदाः।
पुराणचित्रस्थानीयं तेन वन्ध्यं कवेर्वचः॥

( १५ ) प्रश्न :—ओजःप्रसादयोर्मध्ये समाधेरन्तर्भावो भवितुमर्हति न वा ? समाधिगुणस्य कथं पृथग्गुणत्वमिति प्रतिपाद्यताम्।

उत्तरम्—आचार्यवामनप्रणीतायाः काव्यालङ्कारसूत्रवृत्तेस्तृतीयाधिकरणस्य प्रथमेऽध्याये दश शब्द गुणानां मध्ये समाधिनामकः गुणः विद्यते; तस्य लक्षणमस्ति—'आरोहावरोहक्रमः समाधिः'। अत्र लक्षणे आरोहावरोह एव शङ्कास्थानम्। प्रश्नोऽयं समापतति यत् आरोहावरोहौ क्रमेण ओजःप्रसादयोरेव रूपत्वात्—अनयोः संयोगात् समुत्पन्नः समाधिगुणः प्रसादात् भिन्नः न किमपि। अयमेव प्रश्नस्य विषयः। तथा चोक्तं ग्रन्थकृता—

न पृथगारोहावरोहयोरोजः प्रसादरूपत्वात्।

अर्थात्—समाधिः पृथक् गुणो नास्ति आरोहावरोहौ—ओज—प्रसादरूप संभवात्। अपरञ्च आरोहावरोहयोः ओजप्रसाद संभवात् न समाधिनामकः पृथक् गुणः, आरोहः ओजरूपः अवरोहश्च प्रसाद रूप एव।

अत्रेदं तात्पर्यमस्ति—दीर्घवर्णप्रधाने आरोहे ओजगुणस्य वैशिष्ट्यमर्थात् समास बाहुल्यं तिष्ठति। अनेनैव प्रकारेण ह्रस्ववर्णप्रधानेऽवरोहे बन्धस्य शिथिलत्वात् प्रसाद गुणः विद्यमानस्तिष्ठति। अतः आरोहावरोहयोः संयुक्तरूपस्य समाधि नाम्नः पृथग् गुणो भवितुं नार्हति। यतो हि बन्धस्य प्रगाढत्वे शैथिल्यस्य च संयोगे प्रसाद गुणो भवति।

अधुना ग्रन्थकारः शङ्कामुन्मूलयति ( उत्तरयति ) तद्यथा—

न संपृक्तत्वात्।

उपरि यदुक्तं यत्—ओजः प्रसादयोः संयोग एव आरोहावरोहयोः संयोगः, नैतदुचितमिति। भेदः सम्मिश्रणस्य विद्यते। ओजः प्रसादयोः ( प्रसाद गुणे ) नद्यास्तटयोरिव संयुक्तप्रवाहस्तिष्ठति।

अपरञ्च—प्रसाद-समाधि गुणयोः बन्ध-गाढत्व-बन्धशैथिल्ययोः आरोहावरोहयोः संयोगस्यैव भेदो नास्ति ! अपि तु—बन्धगाढत्व-आरोहौ तथा च बन्धशैथिल्यावरोहावपि पर्यायवाचिनौ शब्दौ न स्तः।

अत्राहुः ग्रन्थकाराः—

अनैकान्त्याच्च ।

अत्रायं भावः—( इयं समानार्थता ) ऐकान्तिकोऽपि नास्ति यदोजसि—आरोहःप्रसादे चावरोह एव स्यात् ।

द्वयोः समानाधिकरण्यमस्ति, नास्त्यत्र कापि विप्रतिपत्तिः । द्वयोरैक्य-स्वीकाराय पुनरुवाच—

ओजः प्रसादयोः क्वचिद्भागे तीव्रावस्थायां ताविति चेदभ्युपगमः ।

तथाहि—ओजः प्रसादयोः तीव्रावस्थायां यदि क्वापि वयमारोहावरोहौ-स्वीकुर्मः तदाऽहमपि अनुमतः ।

अत्र कारणमाहुः—विशेषापेक्षित्वात्तयोः ।

विशेषतायाः अर्थोऽस्ति—गुणस्य प्राधान्यम् । अनेन प्रकारेण समाधि—प्रसादगुणयोः पारस्परिको भेदः । एतेन समाधि गुणे प्रसादस्याशंका निर्मूला भवति । अतः समाधिगुणस्य लक्षणमेव दृढीकरोति—तद्यथा—

आरोहावरोहनिमित्तं समाधिराख्यायते ।

अर्थात्—आरोहावरोहयोर्निमित्तः समाधि गुणः विद्यते ।

वास्तविक रूपेणारोहावरोहौ काव्यस्य गुणौ न स्तः–अपितु पाठ धर्मौ स्तः । अतः इमौ गौणवृत्त्यैव स्वीकार्यौ ।

अत्र कारणमाह—

क्रमविधानार्थत्वाद्वा ।

अयं भावः—क्रमस्यार्थो भवति आरोहानन्तरमवरोहः अवरोहानन्तरञ्च आरोहो न भूत्वा, क्रमेणारोहः, क्रमेण चावरोहः । अतोऽस्मिन् गुणे पाठे—आरोहणमवरोहणञ्च क्रमेण भवतः ।

आरोहावरोहौ पाठधर्मौ स्तः न तु काव्यधर्मौ 'न पाठधर्मः सर्वत्रादृष्टेः' इति प्रतिपादनात् ।

अतः समाधिगुणस्य पृथग् गुणत्वं सुतरां सिद्ध्यतीति दिक् ।

( १६ ) प्रश्नः—आचार्य-वामनमतेन ओजःप्रसादादीनां शब्दार्थ-गुणत्वेन प्रतिपादनस्यौचित्यं किम् ।

उत्तरम्—प्रस्तुत समीक्षात्मकोऽयं प्रश्नः आचार्यवामनप्रणीतायाः काव्या-लङ्कारसूत्रवृत्तेस्तृतीयाधिकरणे अध्यायद्वयेन सम्बन्धितः । अस्मिन् अधिकरणे प्रथमसूत्रे काव्यशोभावर्धकाः गुणाः प्रतिपादिताः सन्ति—'काव्यशोभायाः

कर्त्तारो धर्माः गुणाः" इति, काव्यत्वञ्च शब्दार्थेनिष्ठम्। शब्दार्थौ काव्यमिति आचार्य विश्वनाथः। शब्दार्थमयत्वे काव्यशरीरे रीतिधर्मोपयुक्ताः गुणाः भवन्ति तदा कथमेकस्मिन् शब्दे एव गुणानांस्थितिः स्यात् – अपि तु अर्थेऽपि रीतिधर्मानुसारेण काव्यत्वम्। अर्थात् गुणाः काव्ये शब्देषु अर्थेषु च निहिताः भवन्ति। एतदाधारीकृत्य आचार्य वामनेन गुणाः भेदद्वयेन स्वीकृताः। शब्द-गुणोऽर्थगुणश्च। नेयं ग्रन्थकारस्य नूतना कल्पना। इतः पूर्वमपि गुणाः शब्दार्थं भेदाभ्यां काव्यस्योपकारकाः भवन्ति। तथापि काव्यालङ्कारसूत्रवृत्तिप्रणेत्रा आचार्यवामनेन सर्वप्रथममस्य विषयस्य सुस्पष्टं वैज्ञानिकञ्च विवरणमुप-स्थापितम्।

अत्र नैतद् विस्मरणीयं यत्—साहित्यशास्त्रिणां मतेन गुणानां शब्दापेक्ष-या अर्थे स्थितिः विशेषेण महत्त्वपूर्णा विद्यते।

वस्तुतस्तु काव्ये शब्दगुणाः अर्थगुणाश्च समानरूपेण प्रभावोत्पादकाः भवन्ति। अनया दृष्ट्या तुल्य बल-समन्वयात् द्वावपि शब्दार्थौ पृथक् पृथग् विवेचितौ।

अपरञ्च—अर्थगुणस्य तात्पर्यमस्ति काव्यस्यार्थमुखेन उपकर्त्तारः गुणाः। एवञ्च गुणाः यदा प्रधान तत्त्वस्यानुकूल्येन तदुपकारकाः भवेयुः तदैव गुणाः।

अत एव शब्दार्थगुणानां वाच्य-वाचकद्वारेण भेदो निर्दिश्यते।

पुनश्चात्रेदं तात्पर्यमस्ति यत्—यो यस्याश्रितो भवति स तस्य धर्मः। यथा—गवि गोत्वम्। काव्यगुणाः शब्दार्थयोर्द्वयोरप्याश्रिताः भवन्ति। अत एव शब्दार्थौ धर्मौ। काव्यस्यात्मा रीतिः, रीतिश्च पदसंघटनात्मिका। तत्र अर्थं युक्ता पदसंघटनैव वाक्यं भवति। न तु निरर्थकपदानां संघटना। शब्दनिष्ठाः धर्माः शब्दगुणाः, अर्थनिष्ठाश्च धर्माः अर्थगुणाः कथ्यन्ते। द्वावपि शोभावर्धकौ।

अतः ओजः प्रसादादीनां गुणानां शब्दार्थरूपाभ्यां प्रतिपादनस्यौचित्यं निर्विवादमिति।

**(१७) प्रश्नः—अर्थदृष्टिः समाधिरित्यत्रार्थद्वैविध्यं किमिति निपुणं समीक्ष्यताम्।**

**उत्तरम्**—आचार्य वामनविरचितायाः काव्यालङ्कारसूत्रवृत्तेस्तृतीयाधि-करणस्य द्वितीयाध्यायेऽर्थगुणानां वर्णनं विद्यते। तेषु समाधिनामकस्यार्थ-गुणस्य लक्षणं विद्यते—अर्थदृष्टिः समाधिः।

अत्र विशेषेण विचारणीयोऽयं विषयः यदर्थः कतिविधः, कौ च तौ—? एतदभिलक्ष्य ग्रन्थकारः प्रोवाच—

अर्थो द्विविधोऽयोनिरन्यच्छायायोनि र्वा ।

अत्रायमाशयः—यस्य अर्थस्य दर्शनं समाधिः कथ्यते सोऽर्थः द्विप्रकारकः अयोनिः अन्यच्छायायोनिश्च । अयोनेरर्थः यस्य किमप्यन्यद् कारणं न स्यात् । अवधानमात्रेणैव यस्यार्थबोधो भवति । एतद्विपरीतमन्यभावमादाय विनिर्मितं काव्यमन्यच्छायायोनिरिति कथितः ।

तत्राद्यस्योदाहरणम्—( अयोनेः )

आश्वपेहि मम शीधुभाजनाद् यावदग्रदशनैर्नं दश्यसे ।
चन्द्र ! मद्दशन मण्डलाङ्कितः खं न यास्यसि हि रोहिणीभयात् ।।

अन्यच्छायायोनेश्च—

मा भैः शशाङ्कः सम शीधुनि नास्ति राहुः
खे रोहिणी वसति कातर किं बिभेषि ।
प्रायो विदग्धवनितानवसङ्गमेषु
पुंसां मनः प्रचलतीति किमत्र चित्रम् ।।

अत्र प्रथमश्लोकादेव भावमादाय द्वितीयश्लोकस्य रचना विद्यते अतः प्रथम श्लोकस्यार्थः अयोनिः, द्वितीयस्य चान्यच्छायायोनिः ।

अर्थः पुनः द्विधा—अर्थो व्यक्तः सूक्ष्मश्च । तत्र व्यक्तः स्फुट उदाहृत एव । सूक्ष्मश्च द्वेधा भवति । तद्यथा—सूक्ष्मो भाव्यो वासनीयश्च । तत्र शीघ्रनिरूपणाद् बोध्योऽर्थो भाव्यो भवति । एकाग्रता पूर्वकं ध्यानाद् बोध्योऽर्थः वासनीयो भवति ।

भाव्यो यथा—

अन्योऽन्यसंवलितमांसलदन्तकान्ति सोल्लासमाविरलसंवलितार्धतारम् ।
लीलागृहे प्रतिकलं किलकिञ्चितेषु व्यावर्तमाननयनं मिथुनं चकास्ति ।।

वासनीयो यथा—

अवहित्थवलितजघनं विवर्तिताभिमुखकुचतटं स्थित्वा ।
अवलोकितोऽहमनया दक्षिणकरकलितहारलतम् ।।

(१८) प्रश्नः—काव्यपाकं वृन्ताकपाकञ्चेति संक्षेपेण प्रतिपादयत ।

उत्तरम्—आचार्य वामनप्रणीतायाः काव्यालङ्कारसूत्रवृत्तेः तृतीयाधिकरणे दश शब्दगुणानां ( ओज-प्रसाद श्लेष समतासमाधिमाधुर्य सौकुमार्यो-

दारताऽर्थव्यक्तिकान्तीनां ) दश-अर्थगुणानाञ्च लक्षणोदाहरणानि सन्ति । एतेषामुपसंहारमुपस्थापयता—आचार्येण वामनेन काव्यपाकस्य-वृन्ताकपाकस्य च कल्पना कृता । आभ्यां पाकाभ्यां गुणानां स्फुटता पूर्णता च भवति । तेन सहृदयाः साहित्यिकाः कामप्यपूर्वां रसानुभूतिं प्राप्नुवन्ति । गुणानाञ्च महत्त्वं शीर्षस्थमायाति । किं स्वरूपोऽयं काव्यपाकः वृन्ताकपाक' चेत्याह ग्रन्थकारः—

गुणस्फुटत्वसाकल्यं काव्यपाकं प्रचक्षते ।
चूतस्य परिणामेन सा चाऽयमुपमीयते ॥
सुप्तिङ् संस्कार-सारं यत् क्लिष्ट वस्तुगुणं भवेत् ।
काव्यं वृन्ताकपाकं स्याज्जुगुप्सन्ते जनास्ततः ॥
गुणानां दशतामुक्तो यस्यार्थस्तदपार्थकम् ।
दाडिमानि दशेत्यादि न विचारक्षमं वचः ॥

अत्रायमाशयः—गुणानां दशविध ओजः प्रसादादि गुणानां स्फुटत्वं स्फुटभावत्वमेव काव्यपाकः । सुप्तिङो संस्कारो यथाशास्त्रं प्रकृतिषु प्रयोजनमेव सारः स्थिरांशो यस्य । अपि च क्लिष्टा वस्तुनोऽर्थस्य गुणा यस्य । एतेन स्फुट गुणव्यावृत्तित्वं सूच्यते ।

परञ्च केवलं सुप-तिङां संस्कार एव सारो वस्तुतत्त्वं यस्मिन्, एतादृशं क्लिष्टं वस्तु गुणयुक्तं काव्यं विद्वांसः 'वृन्ताकपाक' इति कथयित्वा जुगुप्सां कुर्वन्ति । दशभिः शब्दगुणैरर्थगुणैश्च युक्तं काव्यमविचार्यैवोत्तममिति निगदितम् । यथाहि—महाभाष्ये-दश दाडिमानि, षडयूपाः, कुण्डमजाजिनं पललपिण्ड इति वाक्यमविचारितमिव प्रतिभाति—तथापि श्रेष्ठमेव मन्यन्ते ।

अत्रायं निर्गलितोऽर्थः—यस्य काव्यस्य अर्थः गुणानां दशसंख्याभिर्दशगुणैः रहितः स्यात्—सोऽर्थः 'अपार्थकः' स च तथैवाविचारणीयः यथा महाभाष्ये-दश दाडिमानि, षडपूपाः इत्यादि प्रयोगाः विचाराक्षमाः भवन्ति ।

**(१६) प्रश्नः—गुणस्वरूपं निरूप्य माधुर्यव्यञ्जकवर्णान् निर्दिशत् । ( सं० सं० वि० वि० १९८८ ) ।**

**उत्तरम्**—प्रस्तुतोऽयं प्रश्नः आचार्यवामनप्रणीतायाः काव्यालंकारसूत्रवृत्तेस्तृतीयाधिकरणस्य सम्बन्धितः । यत्र शब्दार्थगुणानामेव विवेचनमस्ति । दोषाणां विपर्ययाः गुणाः भवन्ति, अर्थात् यत्र यत्र दोषाभावस्तत्र तत्र गुणाः भवन्तीति भावः । एतादृशानां गुणानां स्वरूपमाह —

काव्यशोभायाः कर्त्तारो धर्मा गुणाः ।

काव्ये काव्यशास्त्रे शोभाकारकाः धर्माः गुणाः भवन्ति । अत्रायमाशयः—ये शब्दार्थयोः धर्माः काव्ये शोभोत्पादकाः भवन्ति, ते गुणाः कथ्यन्ते । ते ओज-प्रसादादयो भवन्ति न तु यमकोपमादयोऽलंकाराः । गुणानामभावे ते काव्यस्य शोभाकारकाः नैव भविष्यन्ति । आचार्य वामनमतेन गुणाः शब्दार्थयोर्धर्मयुक्ताः भवन्ति, अतः शब्दार्थौ काव्यशरीरभूतौ स्तः ।

एवंभूतेषु दशसु गुणेषु पञ्चमः गुणः—माधुर्यम् । तल्लक्षणं यथा—

पृथक् पदत्वं माधुर्यम् ।

बन्धस्य पृथक् पदत्वं यत् तन्माधुर्यम् । पदानां पृथक्-पृथक् स्थितिरेव पृथक्पदत्वं विद्यते ।

अत्रय्यमाशयः—माधुर्यगुणः 'यथा नाम तथा गुणः' इति नियमानुसारेण समासस्य जटिल-जंजालैर्मुक्तो भवति । अत्र वाक्ये प्रयुक्ते प्रत्येकस्मिन् पदे पृथक् पृथक् विभक्तेः प्रयोगात् अल्पापि क्लिष्टता न भवति । यथा—

अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः ।
पूर्वापरौ वारिनिधी वगाह्य स्थितः पृथिव्यामिव मानदण्डः ।।

अत्र रचनायां पृथक् पदत्वं तिष्ठतीत्यतो माधुर्यगुणस्योदाहरणमिदं पद्यम् । काव्यालंकारसूत्रवृत्तौ माधुर्यव्यंजक वर्णानां गणना नास्ति । अस्मिन् विषये आचार्य विश्वनाथप्रणीते साहित्यदर्पणे विस्तरेण विद्यते—तद्यथा—

माधुर्यव्यंजका वर्णाः युक्ताष्टठडढैर्विना ।
मूर्ध्निवर्गान्त्यगा स्पर्शा अटवर्गा रणौ लघू ।।

मूर्ध्निवर्गान्त्यवर्णेन युक्ताष्टठडढान्विना । रणौ लघू च तदव्यक्तौ वर्णाः कारणतां गताः । अवृत्तिरल्पवृत्तिर्वा मधुरा रचना तथा ( सा० द० ८।३-४ )

( २० ) प्रश्नः—वामनोक्तार्थगुणेषु त्रयाणां लक्षणं सोदाहरणं व्याहरत । ( सं० सं० वि० वि० १९८८ )

उत्तरम्—आचार्य वामनप्रणीतायाः काव्यालंकारसूत्रवृत्तेस्तृतीयाधिकरणे गुणलक्षणपूर्वकं दश शब्दगुणाः दश अर्थगुणाश्च निरूपितास्सन्ति । तेषु दशसु अर्थगुणेषु—उदारता-अर्थव्यक्ति—कान्तिगुणानामत्र क्रमेण लक्षणोदाहरणानि प्रस्तूयन्ते ।

१. तत्रादौ उदारता-गुणस्य लक्षणं यथा—

अग्राम्यत्वमुदारता ।

अत्रायमभिप्रायः—ग्राम्यत्वस्य ( ग्रामीणजनप्रयुक्तस्य ) प्रसंगे समायाते सति-अपि शिष्टभाषायामर्थप्रकटनमर्थगुणेषूदारता—भवति।

उदाहरणञ्च यथा—( कामन्दक्यां मालतीमुद्दिश्योक्तम् )।

त्वमेवं सौन्दर्या स च रुचिरतायां परिचितः
कलानां सीमानं परमिह युवामेव भजथः।
अयि द्वन्द्वं दिष्टया तदिति सुभगे संवदति वा-
मतः शेषं चेत् स्याज्जितमिह तदानीं गुणतया॥

अत्र—प्रथमं त्वं सचेति पृथक्तयोक्तेः, ततो युवामिति मिश्रीकरणेन, तदनन्तरं द्वन्द्वमिति, ततः शेषमिति च विवक्षितार्थव्यञ्जनमुखेन ' फलपर्यवसायित्वमित्यौचित्यशालिना क्रमेण।

२. अर्थव्यक्तिगुणस्य लक्षणं यथा—

वस्तुस्वभावस्फुटत्वमर्थव्यक्तिः।

अर्थात्—वस्तूनां भावानां स्वभावानाञ्च स्फुटत्वम् एव 'अर्थव्यक्तिः अस्ति। उदाहरणञ्च यथा—

पृष्ठेषु शंखशकलच्छविषुच्छदानां राजीभिरङ्कितमलक्तकलोहिनीभिः।
गोरोचना हरितबभ्रुबहिः पलाशमामोदते कुमुदमम्भसि पल्वलस्य॥

अत्र वस्तुस्वभाववर्णने स्फुटत्वं स्पष्टमेवास्ति—अतः अर्थव्यक्ति नामकोऽर्थं गुणः स्पष्ट एवेति।

३. कान्तिगुणस्य लक्षणं यथा—

दीप्तरसत्वं कान्तिः।

दीप्ता रसाः शृङ्गारादयो यस्य स दीप्तरसः। तस्य भावो दीप्तरसत्वम्। रसस्य दीप्तत्वमेव कान्ति नामकोऽर्थगुणो भवति।

साम्प्रतं शृङ्गारादिरसानुक्रमेणोदाहरणानि—उपस्थाप्यन्ते—

सम्भोग शृंगारस्य—

प्रेयान् सायमपाकृतः सशपथं पादानतः कान्तया
द्वित्राण्येव पदानि वासभवनात् यावन्न यात्युन्मनाः।
तावत्प्रत्युत पाणिसम्पुटलसन्नीवी नितम्बं धृतो
धावित्वैव कृतप्रणामकमहो प्रेम्णो विचित्रा गतिः॥

विप्रलम्भशृङ्गारस्याद्यभेदपरस्पराभिलाषस्योदाहरणम्—

प्रेमार्द्राः प्रणयस्पृशः परिचयादुद्गाढरागोदया-
स्तास्ता मुग्धदृशो निसर्गमधुराश्चेष्टाभवेयुर्मयि ।
यास्वन्तः करणस्य बाह्यकरणव्यापाररोधी क्षणा-
दाशंसा परिकल्पितास्वपि भवत्यानन्दसान्द्रो लवः ॥

वीररसे दीप्तरसत्वं यथा—( कान्ति-गुणस्यार्थस्य )

क्षुद्राः सन्त्रासमेते विजहतहरयो भिन्नशक्रेभकुम्भा
युष्मद्गात्रेषु लज्जां दधति परममी सायकाः सम्पतन्तः ।
सौमित्रे तिष्ठ पात्रं त्वमसि न हि रुषो नन्वहं मेघनादः
किञ्चिद् भ्रूभङ्गलीलानियमितजलधिं राममन्वेषयामि ॥

करुणरसे दीप्तरसत्वं यथा—

हा मातस्त्वरितासि कुत्र किमिदं हा देवताः क्वाऽऽशिषो
धिक् प्राणान् पतितोऽशयिर्हुतवहो गात्रेषु दग्धे दृशौ ।
इत्थं गद्गदकण्ठरुद्धकरुणाः पौराङ्गनानां गिर-
श्चित्रस्थानपि रोदयन्ति शतशो कुर्वन्ति भित्तीरपि ॥

अद्भुतरसे दीप्तरसत्वं यथा—

चित्रं महानेष बताधिकारः क्व कान्तिरेषाऽभिनवैव भङ्गी ।
लोकोत्तरं धैर्यमहो प्रभावः काव्याकृतिर्नूतन एव सर्गः ॥

हास्यरसे दीप्तरसत्वं यथा—

आकुञ्च्य पाणिमशुचिर्मम मूर्ध्नि वेश्या
मन्त्राम्भसां प्रतिपदं पृषतैः पवित्रे ।
तारस्वनं प्रहितसीत्कमदात् प्रहारं
हा हा हतोऽहमिति रोदिति विष्णुशर्मा ॥

भयानकरसे दीप्तरसत्व यथा—

ग्रीवाभङ्गाऽभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः
पश्चार्द्धेन प्रविष्टः शरपतनभिया भूयसा पूर्वकायम् ।
दर्भैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥

रौद्ररसे दीप्तरसत्वं यथा—

एतत्करालकरवालनिवृत्तकण्ठ नालोच्चलद्बुद्बुदफेनिलोघैः ।
सार्धंडमड्डमरु डात्कृतिहेतभूतवर्गेण भर्गगृहिणीं रुधिरैर्धिनोमि ॥

बीभत्सरसे दीप्तरसत्वं यथा—

उत्कृत्योत्कृत्यकृत्तिं प्रथमगथपृथूत्सेधभूयांसिमांसा-
न्यस्थिस्फिक्पृष्ठपीठाद्यवयवजटिलान्युग्रपूतीनि जग्ध्वा ।
आत्तस्नाय्वान्त्रनेत्रः प्रकटितदशनः प्रेतरङ्कः करङ्का-
दङ्कस्थादस्थिसन्धिस्थपुटगतमपि क्रव्यमव्यग्रमत्ति ।।

शान्तरसे दीप्तरसत्वं यथा—

अहौ वा हारे वा कुसुमशयने वा दृषदि वा
मणौ वा लोष्टे वा बलवति रिपौ वा सुहृदि वा ।
तृणे वा स्त्रैणे वा मम समदृशो यान्तु दिवसाः
क्वचित् पुण्येऽरण्ये शिव शिव शिवेति प्रलपतः ।।

(२१) प्रश्नः—'विलुलित मकरन्दा' इति कस्य गुणस्योदाहरणमिति लक्षणे संगमय्य साधु विवेचनीयः ।

उत्तरम्—प्रस्तुतमिदमुदाहरणमाचार्यवामनप्रणीतायाः काव्यालंकारसूत्रवृत्तेस्तृतीयाधिकरणे प्रमुखगुणत्वेन चर्चितस्योजसः अस्ति । प्रतिपादितेषु दश शब्दगुणेषु प्रथमोऽयं गुणः । तल्लक्षणञ्च तत्र—

गाढबन्धत्वमोजः ।

अत्राहुः कामधेनु टीकाकाराः—'बन्धस्य पदरचनाया गाढत्वं कनकशलाकावयवघटनवन्निबिडत्वम् । तत्र हेतवः—संयुक्ताक्षरत्वं निरन्तररेफशिरस्कैर्वर्णानां प्रथम द्वितीयैः तृतीय चतुर्थैः प्रथमैस्तृतीयैश्च संयोगा विसर्जनीय जिह्वामूलीयोपध्मानीया गुर्वन्तता समासा चेत्येवमादयस्तरतमभावेनावस्थिताः ।'

अर्थात्—बन्धस्य—पदरचनायाः गाढत्वमोज इति कथयन्ति बुधाः । यत्र पदरचना संश्लिष्टा भवेत्तत्र ओजो गुणो भवति, यथा—

विलुलितमकरन्दा मञ्जरीर्नर्त्तयन्ति ।

अस्मिन् उदाहरणे भ्रमराः मञ्जरीः लोलयन्तः नर्त्तयन्ति, इत्यत्रौजो गुणः । परञ्च यद्येनं वाक्यं परिवर्तयेत्—विलुलितमधुधारा मञ्जरीर्लोलयन्ति' इति कृते सति नात्रौजो गुणः ।

अत्रेदं तात्पर्यम्—ओजो गुणे प्राधान्येन समासप्रधाना रचना भवति । आचार्येण दण्डिनाऽपि तदेव गुणसम्पन्नं स्वीकृतम् । ओजो गुणगुम्फितायां रचनायां रेफाणां कवर्गीयवर्णानामाधिक्यं भवति । अपि च रचनासु वर्गाणां

प्रथमद्वितीयवर्णयोः, तृतीय-चतुर्थ वर्णयोः, प्रथम-तृतीय वर्णयोः संयोगः, एवमेव जिह्वामूलीयोपध्मानीयवर्णयोः आधिक्यमपि तिष्ठति । एतदेवाहुः साहित्यदर्पण-काराः, तद्यथा—

वर्गस्याद्यतृतीयाभ्यां युक्तौ वर्णौ तदन्तिमौ ।
उपर्यधो द्वयोर्वा सरेफाष्टठडढैः सह ॥
शकारश्च षकारश्च तस्य व्यञ्जकतां गताः ।
तथा समासो बहुलो घटनौद्धत्य शालिनी ॥

नन्वत्र शंकते यत्—नेदमुदाहरणं ( विलुलितमकरन्देत्यादि ) ओजोगुणस्य समीचीनं लक्षणानुसारि च । यतो ह्यत्र दीर्घसमासाभावः, न चापि रचनौद्धत्य-शालिन्यस्ति । यद्येवं स्यात्तदा 'विलुलितमधुधारा' इत्यत्रापि ओजोगुणत्वं कथं न, अत्राप्योजो गुणत्वं भविष्यति । लक्षितलक्षणानुसारेण तु सुस्पष्टमुदाहरणं भविष्यति—वेणीसंहारनाटके भीमस्योक्तिरियमौद्धत्यपूर्णा—

चञ्चद्भुजभ्रमित चण्डगदाभिघात-
संचूर्णितोरुयुगलस्य सुयोधनस्य ।
स्त्यानापविद्ध घनशोणितशोणपाणि-
रुत्तंसयिष्यति कचांस्तव देवि ! भीमः ॥

अत्र दीर्घसमासा अपि सन्ति संयुक्ताक्षराण्यपि । इत्यलं पल्लवितेनेति दिक् ।

**(२२) प्रश्नः—अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः । कस्य गुणस्योदाहरणमिदं लक्षणे संगमयतु ।**

उत्तरम्—प्रस्तुतमिदमुदाहरणमाचार्यवामनप्रणीतायाः काव्यालंकारसूत्रवृत्ते-स्तृतीयाधिकरणे तृतीयत्वेन प्रतिपादितस्य शब्दगुणस्य श्लेष गुणस्यास्ति । तल्लक्षणञ्च तत्र—

मसृणत्वं श्लेषः ।

अत्रायं भावः—यत्र एकदैव प्रयुक्तान्येकाधिकानि पदान्येकं संयुक्तपदमिव प्रतीयन्ते तत्र 'मसृणत्वं' भवति । इदमेव मसृणत्वं—शब्दनिष्ठं चिक्कणत्वं श्लेष नामकः शब्दगुणो भवति । यथा—

अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः ।
पूर्वापरौ वारिनिधीऽवगाह्य स्थितः पृथिव्यामिव मानदण्डः ॥

अस्मिन् उदाहरणे प्रयुक्तानि विभिन्नानि पदानि संयोगात् एकपदवत् प्रतीयन्ते अतोऽत्र श्लेष नामकः शब्दगुणोऽस्ति । अत्र माधुर्यव्यंजकपदानामनवरतं

प्रयोगः। एतद्विपरीते सति—सूत्रं ब्राह्ममुरः स्थले'। भ्रमरी वल्गुगीतयः। तडित्कलिलमाकाशम्। इत्यादौ।

तत्र सूत्र—उरस्थलयोर्मध्ये प्रयुक्तं ब्राह्मपदं उभयमपि पृथक्करोति। सैषा स्थितिः 'भ्रमरी' इत्युदाहरणेऽप्यस्ति। 'तडिदिति' इत्युदाहरणे 'ड' वर्णः माधुर्यव्यञ्जकवर्णानां मध्ये आपातात् मसृणत्वं समापयति। एष्वेवोदाहरणेषु किञ्चिन्मात्रपरिवर्तनात् मसृणता समायाति। स्पष्टमेतत्।

एभिरुदाहरणै इति सुस्पष्टं भवति यत्—श्लेष नामकः शब्द गुणः—ओजः प्रसादयोर्व्यञ्जकवर्णैः सह समानरूपेण स्थास्यति।

**( २३ ) प्रश्नः—'अथ नयनसमुत्थं ज्योतिरत्रेरिव द्यौः' कोऽर्थगुणोऽत्र लक्षणपुरस्सरं साधु प्रतिपाद्यताम्।**

उत्तरम्—प्रस्तुतमिदमुदाहरणमाचार्य वामनप्रणीतायाः काव्यालंकारसूत्र-वृत्तेस्तृतीयाधिकरणस्य द्वितीयाध्याये ओजसोऽर्थगुणस्य विद्यते।

अत्र कोऽयमर्थगुण इति जिज्ञासायां समाधत्ते—अस्मिन् विषये मुनिना भरतेन स्वीये नाटचशास्त्रे ओजसः लक्षणं कृतं यत्—

अवगीतविहीनोऽपि यदुदात्तावभावकः।
यत्र शब्दार्थसम्पत्तिस्तदोजः परिकीर्तितम्॥

इति यल्लक्षितं तदेव वामनेन शब्दार्थगुणभेदाभ्यां प्रकारद्वयं स्वीकृतम्। एतद्विपरीतं दण्डिना ओजसः लक्षणे केवलः शब्दगुण एवांगीचकार। भरतमुनिना उदात्तभावस्य भावकोऽर्थः ओज नामकः गुणः स्वीकृतः। यो हि वामनमतेऽर्थ-गुणः।

वस्तुतः 'त एवार्थगुणाः'। शब्दगुणे अर्थगुणे च नास्त्यधिकमन्तरम्। एक एव गुणः बन्धे स्थिते सति शब्दगुणः, अर्थे चार्थगुणः कथ्यते। अपरञ्च एक एव गुणो यदा वाचकत्वेन काव्यस्योपकारं करोति तदा शब्दगुणः, यदा च वाच्य-त्वेन काव्यस्योपकारं करोति तदा 'अर्थ गुणः कथ्यते।

एवंभूतस्यार्थगुणस्याद्यभेदस्यौजसः लक्षणं यथा—

अर्थस्य प्रौढिरोजः।

अर्थस्याभिधातुं योग्यस्य प्रौढिः प्रौढभावापन्नत्वम्—'ओजः' प्रौढित्वञ्च किमिति जिज्ञासायाम्—

पदार्थे वाक्यवचनं वाक्यार्थे च पदाभिधा।
प्रौढिर्व्याससमासौ च साभिप्रायत्वमेव च॥

तत्रादौ पदार्थे वाक्यवचनम्—महाकविकालिदासप्रणीते रघुवंशे यथा—

अथ नयनसमुत्थं ज्योतिरत्रेरिव द्यौः ।

अस्मिन् उदाहरणे चन्द्र पदवाच्येऽर्थे नयनसमुत्थं ज्योतिरत्रेरिति वाक्यं प्रयुक्तम् । अर्थात्—चन्द्रपदेन केवलं चन्द्रः इत्युक्त्वैव वाच्येप्रतिपाद्येऽर्थे 'अत्रे नंयनसमुत्थं ज्योतिः' इति वाक्यस्य विधानमनावश्यकम् । तत्कविना कृतमिति । निष्कर्षश्चात्र—अत्रेः (अत्रि मुनेः) नेत्राभ्यां समुत्पन्नः ज्योतिस्वरूपः । एतत्सर्वं वाक्यखण्डमत्र चन्द्र पदस्य वाचकः तस्मात् पदार्थे वाक्यवचनमित्यस्य ओजस उदाहरणमिदं निष्पन्नम् । उदाहरणान्तरं यथा—

पुरः पाण्डुच्छायं तदनु कपिलिम्ना कृतपदं
ततः पाकोत्सेकादरुणगुण संगगितवपुः ।
शनैः शोषारम्भे स्थपुटनिजविष्कम्भविषमं
वने वीतामोदं वदरमरसत्वं कलयति ॥

अत्र विशेषेण शुष्कमिति पदार्थे कथनीये 'शनैः शोषारम्भे' इति वाक्यं व्यवहृतमिति पदार्थे वाक्यवचनस्योदाहरणम् ।

---

## सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य काव्यालङ्कारसूत्रवृत्तौ प्रश्नाः

### आचार्य ( प्रथम वर्ष )—साहित्य, सन् १९८२,

१. वस्तुस्वभाव-स्फुटत्वम् अर्थव्यक्तिः इति गुणः सोदाहरणं सयुक्तिकं च प्रतिपाद्यताम्— अथवा १०

समाधिगुणस्य लक्षणमुदाहरणञ्च निरूप्य तद्गताम् अर्थस्य दृष्टिं सविस्तरं विवेचयन्तु । सन् १९८७ ई० १०

१. सौकुमार्योदारतार्थ व्यक्तिगुणान् सोदाहरणं प्रस्तुवन्तु । १०

अथवा

श्लेषसमता समाधिगुणाः सोदाहरणं साधनीयः । १०

सन् १९८८ ई०

१. गुणस्वरूपं निरूप्य माधुर्यव्यञ्जकवर्णान् निर्दिशत ।
२. 'तेन नार्थगुणा वाच्या' इति कारिकांश स्फुटीकुरुत ।
३. वामनोक्तार्थगुणेषु त्रयाणां लक्षणं सोदाहरणं व्याहरत ।

---

विक्रमाङ्कदेवचरित-रहस्यम्। डॉ. अशोकचन्द्र गौड़ शास्त्री
विक्रमोर्वशीय-सोपानम्। डॉ. शिवप्रसाद द्विवेदी
विश्वगुणादर्शचम्पू-रहस्यम्। डॉ. शिवप्रसाद द्विवेदी
वेणीसंहार-रहस्यम्। पं. परमेश्वरदीन पाण्डेय
वेदान्तपरिभाषा-सौरभम्। आचार्य शिवप्रसाद द्विवेदी
वेदान्तसार-प्रदीपः। श्रीराजेन्द्रप्रसाद कोठ्यारी
वैदिकसाहित्येतिहास-सोपानम्। डॉ. शिवप्रसाद द्विवेदी
वैयाकरणभूषणसार-दीपिका। श्रीरामकिशोर त्रिपाठी
वैयाकरणसिद्धान्तकौमुदी-चन्द्रिका। आचार्य विजयमित्र शास्त्री। प्रथमखण्ड
तृतीय खण्ड

वैयाकरणसिद्धान्तकौमुदी-दीपिका। श्रीरामकिशोर त्रिपाठी। द्वितीयखण्ड
चतुर्थखण्ड

वैयाकरणसिद्धान्तलघुमञ्जूषा-रहस्यम्। स्वामी रामेश्वर पुरी
वृत्तरत्नाकर-दीपिका। पं. वेदव्यास शुक्ल
व्यक्तिविवेकविमर्शः। प्रथम विमर्श। श्रीराजेन्द्रप्रसाद कोठ्यारी
व्यक्तिविवेकविमर्श। द्वितीय विमर्श। डॉ. शिवप्रसाद द्विवेदी
व्याकरणशास्त्रस्येतिहासः। डॉ. ब्रह्मानन्द त्रिपाठी
शाकुन्तल-रहस्यम्। त्रिलोकीनाथ द्विवेदी
शिवराजविजय-दीपिका। पं. वेदव्यास शुक्ल। प्रथम विराम
शिशुपालवध-रहस्यम्। श्री अशोकचन्द्र गौड़ शास्त्री। १-४ सर्ग
शिशुपालवध-रहस्यम्। डॉ. शिवप्रसाद द्विवेदी। एकादशः सर्गः
सत्यहरिश्चन्द्रोदय-सोपानम्। डॉ. शिवप्रसाद द्विवेदी
संस्कृतभाषाविज्ञानम्। डॉ. शिवप्रसाद द्विवेदी
संस्कृतसाहित्येतिहास-कुञ्जिका। आचार्य परमान्द शास्त्री
सांख्यकारिकादर्शः। राजेन्द्रप्रसाद कोठ्यारी
सार-सिद्धान्तकौमुदी एवं अमरकोश-रहस्यम्। डॉ. शिवप्रसाद द्विवेदो
प्रथम खण्ड १५-००, द्वितीय खण्ड १५-००, तृतीत खण्ड १५-००, चतुर्थ खण्ड
साहित्यदर्पणालोकः। रामजी लाल शर्मा। १-६ परि. १७-५०, ७-१० परि.
साहित्यशास्त्रीयोनिबन्धेतिहासः। वेदव्यास शुक्ल
साहित्याचार्य सफलता सोपानम्। (पंचमपत्र) कामेश्वर सिंहदरभंगा वि. वि.
सिन्धुवादवृत्त-रहस्यम्। डॉ. कृणदेव प्रसाद
स्वप्नवासवदत्त-रहस्यम्। डॉ. कृष्णदेव प्रसाद
स्वरवैदिकी-प्रकाशः। डॉ. बालगोविन्द झा
हर्षचरित-सोपानम्। (१-४ उच्छ्वास)। डॉ. शिवप्रसाद द्विवेदी
हरविजय-रहस्यम्। प्रथमसर्ग। डॉ. शिवप्रसाद द्विवेदी
हरिश्चन्द्रोपाख्यान-रहस्यम्। डॉ. शिवप्रसाद द्विवेदी
नासदीयसूक्त-सन्दर्शिका। डॉ. बाल गोविन्द झा

## परीक्षोपयोगी प्रश्नोत्तरात्मक पुस्तकें

(संस्कृत भाषा में)

अभिधावृत्तिमातृका-सोपानम् । डा० शिवप्रसाद द्विवेदी
अरस्तूकाव्यशास्त्र-सोपानम् । डा० शिवप्रसाद द्विवेदी
अलङ्कारशास्त्रस्येतिहासः । पं० परमेश्वरदीन पाण्डेय
उत्तररामचरितादर्शः । डा० रमाशंकर मिश्र
औचित्यविचारचर्चा-मञ्जरी । डा० नरेश झा
कर्पूरमञ्जरी-दीपिका । श्री गौरीनाथ मिश्र 'भास्कर'
कादम्बरी-कला-प्रकाश । डा० नरेश झा
कादम्बरी प्रश्नोत्तरी । डा० शिवप्रसाद द्विवेदी
काव्यदीपिका-रहस्यम् । श्री गौरीनाथ मिश्र 'भास्कर'
काव्यप्रकाश-रहस्यम् । श्री रामजी लाल शर्मा
काव्यमीमांसा-दीपिका । पं० वेदव्यास शुक्ल (१-५ अध्याय)
काव्यशास्त्रस्येतिहास-सोपानम् । डा० शिवप्रसाद द्विवेदी
काव्यादर्श-सोपानम् । डा० शिवप्रसाद द्विवेदी
काव्यालङ्कारसूत्रवृत्तेः-आलोकः ।(तृतीयाधिकरण प्रश्नोत्तरी) डा० नरेश झा
काशिका-रहस्यम् । १-२ अध्याय । श्री अशोककुमार गौड़
किरातार्जुनीय-रहस्यम् । डा० कृष्णदेव प्रसाद । १-२ सर्ग
३-६ सर्ग
कुमारसम्भव-रहस्यम् । श्री रामप्रसाद त्रिपाठी । १-२ सर्ग
कुवलयानन्दालोकः । डा० नरेश झा
चन्द्रकलानाटिका-रहस्यम् । पं० परमेश्वरदीन पाण्डेय
चन्द्रालोक-रहस्यम् । श्री मानवल्ली तथा वेताल
चम्पूरामायण-सोपानम् । डा० शिवप्रसाद द्विवेदी
चारुदत्त-रहस्यम् । डा० नरेश झा
चित्रमीमांसा-प्रकाशः । डा० नरेश झा
छन्दोमञ्जरी-सोपानम् । डा० शिवप्रसाद द्विवेदी
जातकमाला-दीपिका । आचार्य रामचन्द्र मिश्र
तर्कभाषा-सोपानम् । डा० शिवप्रसाद द्विवेदी
तर्कसंग्रह-रहस्यम् । श्री कीर्त्यानन्द झा
दशकुमारचरित-सोपानम् । डा० शिवप्रसाद द्विवेदी
दशरूपकतत्त्वदर्शन-दीपिका । श्री मनोजकुमार द्विवेदी
दशरूपक-रहस्यम् । डा० त्रिलोकीनाथ द्विवेदी
ध्वनिविरोध्याचार्याणां सिद्धान्ताः । डा० शिवप्रसाद द्विवेदी
ध्वन्यालोक-प्रकाशिका । श्री राजेन्द्रप्रसाद कोठयारी
नलचम्पू-रहस्यम् । पं० परमेश्वरदीन पाण्डेय